२

820

(भूमिका)

भो महिमण्डलाऽलङ्कृतसद्गुणगणाः!!! विद्वन्मणयः!!! महीयांसः!!! गरीयांसः!!!
मल्लेखसरणिमनुसरन्तु कृपया दत्ताऽवधानाः तत्रभवन्तः श्रीमन्तः। नाविदितमेतत् श्रीमताम्। कृत्स्नजगत्प्रख्यातगुणा
आनन्दकन्दश्रीकृष्णचन्द्रमुखारविन्दप्रादुर्भूता त्रिस्रोतोवद्वैव परमपुनीता श्रीमद्भगवद्गीता सूर्यवत्स्वतःप्रकाशा
स्वादित्यगुणैः स्वयं देदीप्यमाना लोके राराजते। येषां विवेकबले विद्यानां महति स्थले संचंक्रमणेन तत्तदर्थतलस्पर्श
र्शेन च नैर्मल्यं संलब्धम् ते सर्वे तत्त्वज्ञानिनो न केवलमेतद्देशप्रसूता भारतवर्षीयाः, अपि तु जर्मनफ्रैञ्चप्रभृतियूरोप
देशीयाः अपीमान् गंभीरविषयान् भगवद्गीतोपनिषदनुभवेनोररीकुर्वन्ति करिष्यन्ति च। एतद्व्यतिरिक्तो न कोऽ
प्युपायान्तरः दरीदृश्यते। परश्चाद्यत्वे प्रायः सकलपारलौकिकसाधकक्रियापराङ्मुखः भ्रमिष्ठा इव सर्वतश्चित्त
वृत्तिचालनवल्लभाः वर्तन्ते भूयांसो मनुष्याः। पादपतितशृंखलाबन्धनमिव परंपरागतवैदिकपद्धतिं दुःखप्रदां
जानन्तितराम्। मन्यन्ते च यथाऽखिलाशिताचारव्यवहारप्रयोगाधिकरणमात्मानम्। तेऽपि वादविवादवैदग्ध्य
प्रदर्शने शेषविषयसंशयसमुत्थापननदीष्णाः दरीदृश्यन्ते। सत्यान्वेषणे तेऽल्पमपि न प्रयतन्ते। यद्येवंविधाः
मानवाः प्रत्यहं श्रीमद्भगवद्गीताऽवलोकनपराः भवेयुस्तर्हि नूनमेव तन्मनः कर्माकर्मविकर्मविज्ञानबोधकं
भविष्यति। भगवद्गीताऽध्ययनजनिताऽऽनन्दनीरधिवीचिः समन्ततः प्रसरतितराम्। साम्प्रतमेतद्विवेचनीयम्।
का नाम भगवद्गीता। युद्धोपरतमर्जुनं प्रति श्रीकृष्णचन्द्रवचनानां सप्तशतश्लोकात्मकमुपलभ्यमानपुस्तकं
श्रीमद्भगवद्गीतेत्युच्यते। उपदेशोऽयं न स्वतंत्रः, किन्तु उपनिषत्सार एव। यतः पुस्तकप्रत्यध्यायसमाप्तौ "इतिश्री
मद्भगवद्गीतासूपनिषत्सु" इति पाठः उपलभ्यते तथा चान्यत्रापि "सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीताऽमृतं महत्" इति पाठादप्यनुमीयते "भगवद्गीता उपनिषद् एव। अथापि च
"तं त्वौपनिषदं पुरुषं पृच्छामि" इति वचनाद्बुध्यते "उपनिषत्प्रतिपाद्यः पुरुषः ब्रह्मैव। उपनिषदः ब्रह्म निरू
पयन्ति" "ब्रह्म च उपनिषदमाचक्षते। एवञ्च भगवद्गीता श्रीकृष्णचन्द्र ब्रह्मस्वरूपमवबोधयति। श्रीकृष्णचन्द्रश्चे

भगवद्गीतां निवेदये। ईशाद्युपनिषदः प्रायस्तया ऋगादिसंहिताचतुष्टयनिःसृताः प्रतीयन्ते,, नहि प्रतीयन्तेऽपितु वेद-
मंत्रा एव तत्रोल्लिखिता वर्तन्ते + इति हृदि संकलय्य मया निरधारि (निरधायि) भगवद्गीता वेद एव,, उत वा केवल
मुपनिषद्। अद्यावधि श्रीपरिव्राजकाचार्यजगद्गुरुश्रीशङ्कराचार्यवाचस्पतिमिश्रप्रभृतिभिः विपश्चिद्वरैः वेदा
न्तसूत्रभाष्यविवृत्यादिलेखनावसरे गीताप्रमाणमपि उपनिषत्त्वेन समग्राहि, न तु वेदपाठत्वेन। एकदाऽहमथ
र्ववेदाध्ययनमग्नः "इमानि यानि पञ्चेन्द्रियाणि मनःषष्ठानि मे हृदि। ब्रह्मणा संशितानि यैरेवाहं संसृजे घोरं तैरेव
शान्तिरस्तु नः,, अथर्ववेद कां. १९ अनु. १ सू. ९ मं. ५ इमं मंत्रमपीपठम्। तदा मच्चित्तवृत्तिः तूर्णमेव "ममैवांशो
जीवलोके जीवभूतः सनातनः। मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति,, भग. अध्या. १५ श्लो. ७ उपर्यपतत्।
व्यचारयम्। श्रीमद्भगवद्गीताश्लोकानां प्रतिपादकाः वेदसंहिताचतुष्टये विधेयम्। यतः भगवद्गीता उपनिषत्।
उपनिषदश्च वेदाः। न वेदव्यतिरिक्ता उपनिषदो भवितुमर्हन्तीति मनसि निधाय वेदचतुष्टयस्याध्या-
यो व्यधायि। तत्र च श्रीकृष्णचन्द्रमुखारविन्दप्रोक्तसमग्रश्लोकमात्राणां पुष्टिकारकाः एवं तत्तदर्थप्रतिपादकाः
संहिताचतुष्टयमंत्राः गवेषिताः सन्ति। अथ चार्जुनविहितस्तुतिश्लोकप्रतिपादकाः अपि केचिन्मंत्राः अन्विष्टाः।
अहो सौभाग्यमेतत् यत् परंब्रह्मकृपालवात् मत्कृत्यमेतत् १४ का. सं. १९९६ समाप्नोत्। यन्नाम "मया वेदगीतेति,, अकारि।
परमेश्वरकृपाकृतार्थोऽस्मि,, ओं शान्तिः शान्तिः शान्तिः॥

निवेदकः
जगन्नाथशास्त्री

हे अर्जुन।
अशोच्यानिति= त्वम् अशोच्यान् शोचितुमनर्हान् भीष्मादीन् अन्वशोचः, एतान् उद्दिश्य शोकं कृतवानसि। च अपि च प्रज्ञावादान्
सदसत्पदार्थस्वरूपं विविच्य ये प्रकर्षेण जानन्ति ते प्रज्ञाः पण्डिताः, तेषां वादा आवादाः तान् प्रज्ञावादान् भाषसे वदसि।
पण्डिताः पण्डा निश्चयात्मिका बुद्धिः तया इताः पण्डिताः गतासून् मृतान् अगतासून् जीवितान् पुत्रादीन् च न अनु
शोचन्ति शोकं न कुर्वन्ति ॥११
निश्चयात्मकबुद्धयः विद्वांसः

(मू. गी.) अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥११

(वेदगी.) प्र यदित्था परावतः शोचिर्न मानमस्यथ। कस्य क्रत्वा
मरुतः कस्य वर्पसा कं याथ कं ह धूतयः ॥ ऋग्वे. अष्ट. १ अध्या. ३ वर्ग. १८ मं. १
ऋ. मं. १ सू. ३९ मं. १

प्रयदीति= हे धूतयः!!! हे कम्पनशीलाः जीवाः!!! "धूञ् कम्पने," "स्त्रियां क्तिन्," इति क्तिन् प्रत्ययः। हे मरुतः!!!
हे मृतप्रायाः जीवाः!!! म्रियन्ते प्राणिनः एभिः इति मरुतः यद्वा "महत् रुवन्ति वदन्तीति मरुतः स्तोतारः!!!
प्राणात्मकस्य वायोर्निर्गमने सति प्राणिनो मृतिः प्रसिद्धैव। अथवा म्रियन्ते इति मरुतः मीरव इतियावत्। यत् यदा
मानम् = मननीयं पुत्रकुलं शोचिः न, तेज इव "नकारः उपरिष्टादुपमार्थीयः, परावतः दूरात् "आरे परावतः" इति
दूरनामसु पाठात् "इत्था इत्थं प्रकारेण पुत्रस्य लात् प्र+अस्य अधिप प्राप्तौ:" [illegible] नि चारत्नानादिभिः
पुत्रोऽपि पाण्डित्याद् दूरं प्रक्षिप्त इति। यथा त्वद्कुलं दूरं गतं तथा तव तेजोऽपि "इत्था= इत्यत्र" "था हेतौ च छन्द
सि," पा. ५।३।२६ इतीदं शब्दात् प्रकारवचने थाप्रत्ययः,, अतः कस्य पुरुषस्य क्रत्वा ~~[illegible]~~ कर्मणा "क्रतु
रिति कर्मनामसु पठितम्। कस्य पुरुषस्य च वर्पसा स्तुतिलक्षणेन संकल्पेन कं पुरुषमुद्दिश्य किंवा पाण्डित्यल
क्षणमुद्दिश्य याथ संसारयात्रां कुरुथ। १॥

(मंगलाचरणम्)

यस्य निःश्वसितं वेदः यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनः प्रातः कुरुक्षेत्रे युदर्णवम्॥१ वेदो गीता तथा गीता वेद एव न संशयः। वेदगीतापृथक्त्वं न द्वयोः ब्रह्मप्रकीर्तनात्॥२ "कार्पण्येति = "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपणः" "कृपणो योऽविजितेन्द्रियः" अतत्वज्ञः कृपणः, तस्य भावः कार्पण्यम् = अज्ञत्वं कातरत्वं वा। तमः प्रधानत्वात् वस्तुस्वरूपं दूषयति इति दोषः तेनोपहतः तिरोहितः। स्वस्य अविक्रियस्य आत्मनः भावः सत्ता यस्य सः कार्पण्यदोषोपहतस्वभावः। धर्मसंमूढचेताः - धार्यते पाल्यमानः पुमान् अनेनेति धर्मः, तस्मिन् ज्ञानात्मके धर्मे संमूढम् अप्रविष्टं चेतो मनो यस्य तथाभूतः, अहम् अर्जुनः त्वां परमेश्वरं कृष्णस्वरूपं पृच्छामि। महर्षिभिः श्रुतिस्मृत्याधारतः यन्निश्चितं निश्चितं श्रेयः स्यात् श्रेयः साधकं शोकविध्वंसकं तत् मे ब्रूहि वद। अहं ते तव शिष्यः धर्मजिज्ञासुः शिष्यभावं गतः त्वां जगदीश्वरं प्रपन्नं शरणं गतं मुमुक्षुं मां शाधि शिक्षस्व बोधयेति यावत्। ८

(मू. गी.) कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्॥८॥

(वेदगीता) इन्द्रस्य गृहोऽसि। तं त्वा प्रपद्ये तं त्वा प्रविशामि। सर्वगुः सर्वपूरुषः सर्वात्मा सर्वतनूः सह यन्मेऽस्ति तेन॥ अथर्व. कां. ५ अनु. २ सू. ६ मं. ११

इन्द्रस्येति = इदि ऐश्वर्ये, ऐश्वर्योपेत इन्द्रः आत्मा "इन्द्रत्वप्रापकात् कर्मणः इन्द्रो जज्ञे इन्द्रशब्दः स्वकारणभूते कर्मणि उपचर्यते इन्द्रस्य कर्मणः गृहोऽसि उत्पत्तिस्थानमसि अतः मत्कार्पण्यदोषितकर्मज्ञातोऽसि "इन्द्रस्य च मायासम्बन्धः श्रुत्यन्तरे प्रसिद्धः। "मायाभिरिन्द्र मायिनम्—" ऋ. १।११।७ अतः मायिनः कपटिनः जीवस्य गृहोऽसि स्थानमसि। अतोऽपि मत्कार्पण्यदोषस्य ज्ञातोऽसि अतः तं त्वां प्रपद्ये "तच्छब्दस्य दूरस्थे प्रयोगः। युष्मच्छब्दस्य च संमुखस्थे प्रयोगः। अतस्तं परमात्मस्वरूपं त्वां संमुखस्थं श्रीकृष्णचंद्रं प्रपद्ये शरणं प्राप्नोमि। तथा च तं परमात्मस्वरूपं त्वां संमुखस्थं श्रीकृष्णचंद्रं प्रविशामि अर्थात् त्वत्स्वरूपप्रतिपादनरूपं श्रेयः प्रविशामि स्वश्रेयस्त्वं त्वत्तः स्वस्मिन् प्रवेशयामि। भवांश्च सर्वतनूः सर्वेषां तनूः शरीरं कारणभूतं सर्वोत्पत्तिस्थानं सर्वशरीराभिमानी विराडात्मको भवति। सर्वगुः सर्वत्र गमनशीलः। सर्वात्मा = सर्वेषां जीवानां आत्मा मनः सर्वत्रान्तर्यामितया स्थितः। सर्वपूरुषः सर्वेषां जीवानां प्रति शरीरे शेते इति सर्वपूरुषः सच्चिदानन्दस्वरूपः। यत् मे सह अस्ति = यत् यस्मात् कारणात् ईदृग्विशेषणविशिष्टः परमात्मा मे सह मया सह मे संमुखस्थोऽस्ति तेन हेतुना तं त्वां प्रपद्ये शरणं प्रपन्नोऽस्मि॥८२

न त्वेवेति = अहं तत्पदार्थः, परमात्मा त्वत्संमुखस्थः श्रीकृष्णः जातु कदाचित् न आसम् न अभूवम् इति न। न त्वं त्वंपदलक्ष्यार्थः अर्जुनः न आसीत् इति न। इमे जनाऽधिपाः सम्मुखे दृश्यमानाः जनाधिपा न आसन् इत्यपि न, इमेऽपि पूर्वमासन्निति भावः। सर्वे वयं जीवाः अतः परम् एतज्जन्मानन्तरं न भविष्यामः अतः परमस्माकं सर्वेषां जन्म न भविष्यतीति न च एव। एतेन जीवस्य देहेन्द्रियादिभ्यो भिन्नत्वं नित्यत्वञ्च सूचितं भवति ॥१२

(मू. गी.) न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥१२॥

(वेदगी.) प्रथमेन प्रमारेण त्रेधा विष्वङ् विगच्छति।
अदः एकेन गच्छत्यदः एकेन गच्छतीहैकेन निषेवते ॥ अथ. कां. ११ अनु ४ सू. ८ मं. सू. मं. ३३

प्रथमेनेति = पूर्वस्मिन् प्रकरणे जीवात्मा सूक्ष्मशरीरेण भोगायतनं स्थूलशरीरं प्रविश्य इन्द्रियैः पुण्यापुण्यात्मकानि कर्माणि अनुष्ठाय तत्फलोपभोगार्थं मरणानन्तरं भिन्नभिन्नदेहान् प्राप्नोति तदत्र वर्ण्यते। प्रथमेन प्रथमभाविना मुख्यतमेन स्थूलशरीरेण प्रमारेण प्रमृतेन हेतौ तृतीया, भोगायतनस्य शरीरस्य तदारम्भककर्मक्षयेण त्यागाद्धेतोः। स जीवात्मा त्रेधा त्रिप्रकारं स्वर्गनरकमर्त्यलोकम् अर्थात् "ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः। जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः" इति भगवद्गीतोक्तसत्त्वरजस्तमोगुणप्रधानत्वेन त्रेधा त्रिप्रकारकं जन्म विष्वङ् सर्वतः नानायोनिं वा विगच्छति विविधेन प्रकारेण कर्मफलानुकूलं प्रयाति। एकेन कर्मणा अर्थात् सत्त्वगुणप्रधानेन पुण्येन अदः विप्रकृष्टं स्वर्गसुखावहं जन्म गच्छति। एकेन कर्मणा अर्थात् रजोगुणप्रधानेन सुखदुःखावहं मध्यमं जन्म गच्छति। एकेन कर्मणा तमोगुणप्रधानेन इहाऽस्मिन्नेव भूलोके तिर्यगादीनि तमोगुणप्रधानानि जन्मानि निषेवते प्राप्नोति। यथा च श्रूयते "पुण्येन पुण्यलोकं नयति पापेन पापम् उभाभ्यामेव मनुष्यलोकमिति", अथाऽपि च "नित्योऽनित्यानां चेतनश्चेतनानाम् बहूनां यो विदधाति कामान्" श्वे. ५।१३।

देहिन इति = अस्मिन् देहे देहिनः देहोपाधिमतः आत्मनः कौमारं कुमारस्य इदं कौमारं वपुरिति शेषः। बाल्यावस्था इत्यर्थः। यौवनं पुनः इदं यौवनं युवाऽवस्था। जरा वृद्धाऽवस्था यथा येन प्रकारेण याति। कौमारं विमुञ्चतः यौवनं, यौवनं जहतः जरठं वपुरनुयाति। तथैव एतत् स्थूलं देहं त्यजतः देहान्तरम् = अन्यो देहश्चायाति अविनश्यत एव आत्मनः धीरः विद्वान् तत्र तत्कर्मणि न मुह्यति मोहं न प्राप्नोति ॥१३

(मू॰ गी॰) देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिः धीरस्तत्र न मुह्यति ॥१३

(वेदगी) कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम। १३ वर्ग॰ १ मं॰ (ऋ॰ मं॰ १ सू॰ २४ मं॰ १)
को नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च,, ऋ॰ अष्ट॰ १ अध्या॰ २
ऋ॰ १ मं॰ सू॰ २४ मं॰ १
कस्येति - वयं जीवाः अमृतानां मरणधर्मरहितानां "देवा विद्वांसः" देवा इन्द्रियाणि, तेषां मध्ये कतमस्य किं जातीयस्य कस्य देवस्य चारु मनोहरं नाम मनामहे उच्चारयामः। को देवः मां मुमूर्षुं पुनरपि मह्यै महत्यै अदितये अखण्डनीयाय परमेश्वराय दात् दद्यात्। तेन दानेन अहम् अमृतः सन् पुनः द्वितीयस्मिन् जन्मनि पितरं जनकं मातरं जननीं दृशेयं पश्येयम्। एतद्वचनं श्रुत्यन्तरेऽपि प्रत्यपादि यथा - अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम। स नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च,, ऋ॰ अष्ट॰ १ अध्या॰ २ व॰ १३ मं॰ २ "पुनर्मै त्विन्द्रियं पुनरात्मा द्रविणं ब्राह्मणं च ॥ पुनरग्नयो धिष्ण्या यथास्थाम,, ऋ॰ अथर्व॰ कां॰ ७ अनु॰ ६ सू॰ ६७ मं॰ १ ॥
ऋ॰ १ मं॰ ३ २४ सू॰ मं॰ २
कल्पयन्तामिहैव,,

(वेदगी·) ᵡ यथा शीततौ शीतं दुःखदायि भवति, ग्रीष्मे तदेव सुखदायि भवति। एवमुष्णकाले उष्णता दुःखदायिनी भवति, शीतकाले च सैव सुखदायिनी भवति। अथ च



मात्रेति = मीयन्ते आभिर्विषया इति मात्रा इन्द्रियाणि, मात्राभिः इन्द्रियैः स्पृश्यन्ते गृह्यन्ते इति स्पर्शाः शब्दादयः भोग्यपदार्थाः शीतोष्णसुखदुःखदाः = शीतोष्णवत् सुखदुःखदायकाः, ᵡयथा शीतोष्णे अनुकूले सुखदे भवतः, ते एव प्रतिकूले सती दुःखं यच्छतः। तथैव शब्दादयो विषया अपि अनुकूलाः सन्तः सुखं यच्छन्ति प्रतिकूलाः सन्तः दुःखं ददति। आगमाऽपायिनः = आगमः उत्पत्तिः, अपायः नाशः, तद्वन्तः अतोऽनित्याः तज्जन्यसुखदुःखादयः क्षणकालाऽवस्थायिनः सन्ति। हे भारत! भा ज्योतिः ज्ञाने वा तत्र रमते इति भारतः, हे ब्रह्मनिष्ठ! हे कौन्तेय! हे अर्जुन! त्वं तान् विषयान् तत्संयोगवियोगान् च तितिक्षस्व सहस्व। १४। तत्संबुद्धौ हे भारत!

(मू·गी·) मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः।
आगमाऽपायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥१४

(वेदगी·) अति निहो अति सृधोऽत्यचित्तीरति द्विषः। विश्वा ह्यग्ने दुरिता
तर त्वमथास्मभ्यं सहवीरं रयिं दाः॥ अथ· कां· २ अनु· २ सू· ६ मं· ५

अतीति = हे अग्ने! हे धनञ्जय! अग्नेरपरपर्यायः धनञ्जयः। "अग्निरपि रुद्र उच्यते" इति निरुक्तोक्तेः "रुद्रः राजा भवति। अर्जुनोऽपि राजपुत्रत्वाद्राजा एव अतोऽत्र "अग्निशब्देन धनञ्जयस्य अर्थात् अर्जुनस्य ग्रहणम्। त्वं निहः = निहन्तॄन् विषयजान् सुखदुःखादिदोषान् "हन्तेः क्विपि टिलोपश्छान्दसः। यद्वा निकृष्टाम् श्वशूकरादियोनिप्राप्तिरूपां नीचगतीः "ओहाङ् गतौ" क्विबन्तात् शसि "आतो धातोः" इत्याकारलोपः। तान् अतितर = अतिशयेन पारं कुरु। स्रधः "स्रेधति शोषणकर्मा" छान्दसः ततः क्विप्। देहशोषकान् रोगान् तथा अचित्तीः अशोभनबुद्धीः पापप्रवणाः तथा द्विषः द्वेष्टॄन् विषयजान् शत्रून् अतितर अतिक्रमस्व। त्वं विश्वा विश्वानि सर्वाणि दुरिता दुर्गतानि पापपुण्यरूपान् सुखदुःखदोषान् अतितर पारं कुरु। अथ = अनन्तरम् सुखदुःखादिविषयतरणानन्तरम् अस्मभ्यं मदर्थम् भगवदर्थं सहवीरं कुलाचारसहितं रयिंᵡ प्रवाहे वेगे वा दाः देहि। "तेन सहेति तुल्ययोगे" इति तुल्यक्रियायोगे बहुव्रीहौ "वोपसर्जनस्य सहस्य सः" समासे वा विकल्पः तेन सहवीरम्" इति सिद्धम्। ५। तुलना = गीतायाम् अनित्यसुखदुःखादिविषयाणां परित्यागः, ब्रह्मप्राप्तये सुखदुःखादि-द्वन्द्वसहनं कथितम्। वेदे दितिर्यग्योनिप्राप्तिनिवृत्तये दुर्विचाराणां विषयाणां च परित्यागः भगवतः चरणकमलोपलब्धये च ज्ञानोपलब्धिरुपदिष्टा ॥

ᵡ ज्ञान

भ॰गीता = हे पुरुषर्षभ! पुरुषेषु नरेषु ऋषभः श्रेष्ठः = पुरुषर्षभः, तत्संबुद्धौ हे पुरुषर्षभ! हे पुरुषश्रेष्ठ! हे अर्जुन! धीरं विषयग्रहणेऽप्यो धियं बुद्धिं याति नियच्छति इति धीरः सदात्मनिष्ठस्तथाभूतम्, समदुःखसुखं समे दुःखसुखे यस्य तं सुखदुःखयोरेकरसमितिभावः, तथाविधं पुरुषं एते शीतोष्णादयः विषयाः न व्यथयन्ति, न बाधन्ते स्वस्थितितो न चालयन्ति स एव पुरुषः अमृतत्वाय मुक्तये कल्पते योग्यो भवति ॥ १५ ।

(भ॰गी॰) यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ!
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥

(वेदगीता) न यं जरन्ति शरदो न मासा न द्याव इन्द्रमवकर्शयन्ति ।
वृद्धस्य चिद्वर्धतामस्य तनूः स्तोमेभिरुक्थैश्च शस्यमाना, ऋ॰ मं॰ ६ अनु॰ ३ सू॰ २४ मं॰ ७

न यमिति = यम् इन्द्रं जीवात्मानं शरदः संवत्सरां ~~[struck]~~ वर्षमात्रेजन्यशीतोष्णजन्य सुखदुःखादयः न जरन्ति न जरयन्ति नापक्षीणयन्ति, तथा मासाः शुक्लकृष्णात्मक सुखदुःखपक्षद्वयरूपाः, न जरन्ति, तथा द्यावः दिवसाः शोभना अशोभना वा न अवकर्षयन्ति न क्षीणं कुर्वन्ति। अस्य समदुःखसुखस्य वृद्धस्य बृहद्रूपस्य पुरुषस्य तनूः शरीरं स्तोमेभिः स्तोत्रैः स्तुतिजन्यसुखैः शस्यमाना स्तूयमाना सती, तथा उक्थैः शस्त्रैश्च शस्यमाना छिद्यमानापि इत् = एव सती वर्द्धताम् प्रवृद्धा भवतु, अर्थात् समदुःखसुखः पुरुषः अमृतत्वाय कल्पते ॥ १२, ७ ॥ यच कठोप॰ २ अध्याय॰ १ वल्ली ११ मंत्र

"तानेन धीरा ये व वृहद्रू..."

ओं सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥

तुलना = गीतायां शीतोष्णद्वन्द्वादिपरित्यागः, सुखदुःखसमताज्ञानं मुक्तिहेतुरिति कथितम्।
वेदेऽपि ऋतुजन्यमासजन्यदुर्दिनादिजन्यसुखदुःखपरिहार एव अमृतत्वकारणमुक्तम् ॥

नासत इति = असतः देहाद्यनित्यपदार्थस्य, भावः सत्ता नित्यता इति यावत्, न विद्यते न वर्तते। तथा सतः नित्यपदार्थस्य एकरसस्य अभावः अविद्यमानता न विद्यते। अनयोः उभयोः द्वयोः सदसतोः अन्तः तत्त्वम् निश्चयो वा। तत्त्वदर्शिभिः तत्त्वं सर्वाऽधिष्ठानभूतस्य ब्रह्मणो याथात्म्यम् अबाधितस्वरूपं सत्यज्ञानानन्दात्मकं यत् तदेव द्रष्टुं शीलं स्वभावो येषां ते तत्त्वदर्शिनः, तैः तत्त्वदर्शिभिः दृष्टः अवलोकितः। १६॥

(मू॰ गी॰) नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥ १६॥

(वेदगी॰) सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते।
तयोर्यत्सत्यं यतरदृजीयस्तदित् सोमोऽवति हन्त्यासत्॥ ऋ॰ मं॰ ७ अनु॰ ६ सू॰ १०४ मं॰ १२
अथर्व॰ कां॰ ८ अनु॰ २ सू॰ ४ मं॰ १२

सुविज्ञानमिति = चिकितुषे विदुषे तत्त्वदर्शिने जनाय पुरुषाय इदं सुविज्ञानं विज्ञातुं सुशकं भवति। सत् नित्यं किम्? असत् अनित्यं किमस्ति। सत्, असत् इति वचसी वचने पस्पृधाते = मिथः स्पर्धेते; यत् सत् तत् असत् न भवितुमर्हति यत् असत्, तत् सत् भवितुं नार्हति। तयोः सदसतोर्मध्ये यत् सत्यं सत्स्वरूपं यतरत् यच्च ऋजीयः ऋजुतमम् अकुटिलम्। तदित् तदेव सत्स्वरूपं सोमः सौम्यगुणविशिष्टः, यद्वा सोमः अमृतस्वरूपः नित्य एव अवति पुरुषं रक्षति। असत् उक्तलक्षणं देहाद्यसत्पदार्थं हन्ति पुरुषे हन्ति हिनस्ति नाशयति, सत्या दूरीकरोतीति भावः। १२

(आ) आहमन्तात

अविनाशीति = येन अतिसूक्ष्मेण विभुना सदात्मकेन इदं परिदृश्यमानं सर्वं जगत् ततम् अन्तर्बहिश्च व्याप्तं भवति। तत् सच्छब्दवाच्यं वस्तु अविनाशि विनाशरहितम्। कश्चित् कोऽपि पुरुषः अव्ययस्य न व्येति इति अव्ययम् तस्यैतस्य अव्ययस्य विनाशं विनाशभावं कर्तुं न अर्हति ॥ १८

(मू. गी.) अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥१८॥

(वेदगी.) असति सत् प्रतिष्ठितं सति भूतं प्रतिष्ठितम्। भूतं ह भव्ये आहितं भव्यं भूते प्रतिष्ठितम्। तवेद् विष्णो बहुधा वीर्याणि। त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥१९॥ अथ. का. १७ अनु. १ सू. १ मं. १९ ॥

असतीति = असत्पदार्थे ब्रह्मादिस्तम्बपर्यन्ते ब्रह्माण्डे देहे वा सत् ब्रह्म जीवो वा "सदेव सोम्येदमग्र आसीत्" छा. ३. ६। २।१॥ "सत्यं ज्ञानमनन्तं ब्रह्म" तै. आ. १६।१ इत्यादिवचनैः असच्छब्देन ब्रह्मव्यतिरिक्तः पदार्थोऽभिधीयते। असति सत् ब्रह्म जीवो वा भवति। प्रतिष्ठितम् आश्रितम्। देहः आत्मनः निवासस्थानं गृहं वा, अतः "असति सत्" प्रतिष्ठितमित्युक्तम्। सति नित्ये आत्मनि भूतं भूतकालावच्छिन्नं पृथिव्यादिभूतपञ्चकं सकलसृष्ट्युपादानं भूतम् अव्यक्तं प्रतिष्ठितम् तत् आश्रित्य सर्वमुत्पद्यते इत्यर्थः। यथा च "आत्मनः आकाशः संभूतः" तै. आ. ८।१। भूतं भूतपञ्चकं सर्वस्य देहादिकार्यप्रपञ्चस्य उपादानभूतं भव्ये देहादिकार्यजाते आहितमनुगतम् अस्ति। तच्च भव्यं कार्यजातं भूते स्वकारणभूते भूतपञ्चके प्रतिष्ठितं नियतं वर्तते। कारणव्यतिरेकेण पृथगवस्थानाऽभावात्। एवमात्मनः नित्यत्वं सिद्धं कार्यभूतस्य देहादिपदार्थस्य अनित्यत्वमुक्तम्। अतस्तमात्मानं विनाशयितुं कोऽपि नार्हति। हे विष्णो! हे विष्ण्वंशरूपजीवात्मन्! तव देहादिस्थस्य आत्मनः इत् एव वीर्याणि चिच्छक्तिजन्यवीर्याणि बहुधा बहुप्रकाराणि सन्ति, न तु देहादिपदार्थस्य सन्ति, यतस्त्वमेव ब्रह्मांशः ब्रह्मांशत्वात्तव वीर्याणि अनन्तानि। त्वं नित्यात्मा नः संसारस्थान् जीवान् अस्मान् विश्वरूपैः विश्वस्य स्वरूपैः पशुभिः पश्यतीति पशुः जीवः, तैः पशुभिः जीवात्मभिः पृणीहि पूरय परिपूर्णं कुरु। एकात्मज्ञानेन सर्वात्मज्ञानं पूरय। तथा मा मां ~~मरणा~~ देहत्यागानन्तरं परमे निरतिशये व्योम्नि विशेषेण अवतीति व्योम तस्मिन् व्योमनि मुक्तिपदे सुधायां = सुष्ठु धीयते पीयते रसः, वा धीयतेऽर्प्यते सर्वं सा सुधा तस्यां सुधायाम् अमरणरहितायां पदव्यां धेहि स्थापयेति भावः ॥ १९॥

अन्तवन्त इति = हे भारत! भरतकुलोत्पन्न! अर्जुन! अप्रमेयस्य प्रमातुमशक्यस्य दुर्विज्ञेयस्येति भावः। अनाशिनः नाशरहितस्य नित्यस्य शरीरिणः ब्रह्मादिस्तम्बान्तानि शरीराणि उपलब्धिस्थानत्वेन अस्य सन्ति इति शरीरी सर्वप्राणिशरीरोपाधिकः तस्य आत्मनः इमे देहाः अन्तवन्तः, अन्तोऽवसानम् अदर्शनम् तद्वन्तः, जन्मादिमत्वेन प्रतीतिमात्रत्वेन च अनितसत्ताका इतियावत् उक्ताः कथिताः। तस्मात् कारणात् युद्ध्यस्व युद्धं कुरु, तव युद्धकरणे न कोऽपि दोषः। १८।

(मू॰ गी॰) अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः।
अनाशिनोऽप्रमेयस्य तस्माद् युद्ध्यस्व भारत॥ १८॥

(वेदगी॰) अयं होता प्रथमः पश्यतेममिदं ज्योतिरमृतं मर्त्येषु।
अयं स जज्ञे ध्रुव आनिषत्तोऽमर्त्यस्तन्वा३ [redacted] वर्धमानः॥ ऋ॰ मं॰ ६ अनु॰ १ सू॰ ९ मं॰ ४ यद्वा
अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु॥ ऋ॰ मं॰ १० सू॰ ७९ मं॰ १

अयमिति = अयम् आत्मा प्रथमः अनादिः नित्य इत्यर्थः। होता हवनकर्ता यद्वा इन्द्रियाणामाह्वाता, अर्थात् इन्द्रियाणां नियामकः अस्ति। इमम् आत्मानं पश्यत अविनाशिनं विलोकयत। अयमात्मा मर्त्येषु मरणधर्मात्मकेषु देहेषु इदं ज्योतिः, ज्योतीरूपमिदं तत्त्वम् अमृतं मरणधर्मरहितं नित्यमस्ति। अयमात्मा ध्रुवः स्थिररूपः नित्यस्वरूपः आत्मा जज्ञे देहे प्रादुर्भूतः तन्वा सह देहेन सह वर्धमानः वृद्धिं प्राप्नुवन् "अणोरणीयान् महतो महीयान्" इत्युक्तेः मशकहस्त्यादिदेहाऽनुरूपं प्रकटीभवन् अमर्त्यः स्वयं मरणधर्मरहितः अमर इत्यर्थः आनिषत्तः सर्वतो निषण्णः इति। ४। अपश्यमिति = मर्त्यासु मरणधर्मवतीषु विक्षु प्रजासु अस्य महतः अमर्त्यस्य आत्मनः मरणधर्मरहितस्य महित्वम् महत्त्वम् अपश्यम् पश्यामि॥ १॥

य इति = यः ~~"अहम् एनं हन्मि, स्वयं प्रत्ययार्थी"~~ एनम् आत्मानं ~~हन्ति~~। हन्तारं नाशकं वेत्ति जानाति यः पुरुषः च एनम् आत्मानं हतं हननक्रियाविषयभूतं मन्यते जानाति। उभौ तौ पुरुषौ आत्मानं नि विजानीतः। यथाभूतम् आत्मतत्त्वं साक्षान् विदितवन्तौ। यतोऽयमात्मा न स्वयं यं कञ्चन हन्ति न च येन केनापि हन्यते ॥ १९

(मू० गी०) य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९

(वेदगी०) सोऽरिष्ट न मरिष्यसि न मरिष्यसि मा बिभेः।
न वै तत्र म्रियन्ते नो यन्त्यधमं तमः,, अथ० कां० ८ अनु० १ सू० २ मं० २४

स इति = हे अरिष्ट! रिष्टं रेषो हिंसा सा यस्य नास्ति, स अरिष्टः तत्सम्बुद्धौ हे अरिष्ट! निरस्तहिंस! हे मृत्युकर्तृक हिंसारहित! हे नित्यात्मन्! सः त्वं हननघातकक्रियारहितत्वे न मरिष्यसि मृत्युं प्राप्स्यसि प्राप्स्यते वा न मरिष्यसि न मारयिष्यसि कमपि "द्वितीयं मरिष्यसिपदे ण्यन्तलुप्तमेव,, अतः मा बिभेः मरिष्यामीति भीतिं मा प्राप्नुहि। न कश्चिदात्मा केनचिद्धन्यते न कश्चिद्धन्ति नित्यत्वात्। तत्र आत्मतत्त्वसाक्षात्कारे "वैशब्दः प्रसिद्धौ,, न म्रियन्ते आत्मानः न प्राणान् त्यजन्ति। न अधमं तमः = तमःस्वरूपं घातकं कर्म पापरूप यन्ति प्राप्नुवन्ति ॥ २४

न जायते इति = न जायते इत्यजः स्वयं जननरहितोऽयमात्मा कदाचित् न जायते नोत्पद्यते, अनेन भावविकारः निरस्तः।
अयम् आत्मा च कदाचित् न म्रियते नाशक्रियां नाप्नोति,, इत्यनेन विनश्यतीति षष्ठो विकारो निरस्तः। अयम् आत्मा भूत्वा =
जननक्रियां प्राप्य भूयः पुनः भविता, अस्तित्ववान् न भवतीत्यनेन "जायते" इति द्वितीयो विकारः निरस्तः। अयमात्मा नित्यः
एकरूप इति "विपरिणमते,, इति विकारो निरस्तः। शाश्वतः = अयमात्मा शश्वद्भवतीति शाश्वत इत्यनेन "अपक्षीयते,, इति
क्षयलक्षणः पञ्चमो विकारः निरस्तः। पुराणः अयमात्मा पुरा अपि अधुनापि च सर्वदा नवत्वात् पुराणः इत्यनेन वृद्धि
लक्षणः विकारो निरस्तः। अस्मिन् शरीरे खड्गादिना हन्यमाने छिद्यमाने सति अपि आत्मा निर्विकारत्वात् "स्वयं घटे भिद्यमा-
ने घटाकाशवत् न हन्यते हननक्रियाया विषयो न भवति। "अविनाशी वाऽरेऽयमात्माऽनुच्छित्तिधर्मा,, ॥ २०

(मू. गी.) न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ २० ॥
(वे. गी.) न स जीयते मरुतो न हन्यते न स्रेधति न व्यथते न रिष्यते।
नास्य राय उप दस्यन्ति नोत य ऋषिं वा यं राजानं वा सुषूदथ ॥ ऋ. मं. ५ अनु. ४ सू. ५४ मं. ७

न स इति = हे मरुतः!!! हे महात्मानः!!! हे तत्वज्ञाः!!! यम् ऋषिं देहादिगतं राजानं स्वभासा प्रकाशमानम् आत्मानं सुषूदथ
सत्कर्मसु प्रेरयथ। स आत्मा न जीयते वयोहानिं न प्राप्नोति न विनश्यतीतिभावः। स आत्मा न हन्यते हननक्रियाविषयो न
भवति। न स्रेधति = अयम् आत्मा न क्षीयते "स्रेधतिः शोषणकर्मा,,। अयमात्मा न व्यथते न पीड्यते केनचिदपि। अयम्
आत्मा न रिष्यते न हिंस्यते हन्यते इतियावत्, अत्र हिंसा बाधमात्रं ज्ञेयम्। अस्य आत्मनः रायः ज्ञानशक्तयः न उप
दस्यन्ति न उपक्षीयन्ते। ऊतयः ऊतिः रक्षा इत्युच्यते "ऊतियूतिजूतिसातिहेतिकीर्तयश्च,, इति निपात्यते,, न
उपदस्यन्ति नोपक्षीयन्ते ज्ञानबलेन तस्य आत्मनः संसारात् रक्षा भवति। एतदेव मंत्रान्तरेऽपि प्रतिपादितमस्ति।
अन्ति सन्तं न जहात्यन्ति सन्तं न पश्यति। देवस्य पश्य काव्यं न ममार न जीर्यति,, अथर्ववे
दः कां. १० अनु. ४ सू. ८ मं. ३२ ॥ हे मुमुक्षो! अयं अविवेकी जनः अन्ति सन्तं समीपे वर्तमानं देहं न जहाति न
त्यजति। देहमेवात्मानं मन्यते। अन्ति समीपे सन्तं हृदयस्थं आत्मानं न पश्यति नावलोकयति, नाभिजानाति।
देवस्य = स्वभासायी प्रभा तस्य आत्मनः काव्यं क्रान्तदर्शित्वं ज्ञानघनं पश्य अवलोकय। न जीर्यति अयं
आत्मा जीर्णत्वं न याति। ममार देहे विनष्टेऽपि न म्रियते, स सदा नित्यः अजरोऽमरश्चास्ति।

अन्वयं

वेदेति = हे पार्थ! हे पृथायाः पुत्र! अर्जुन! यः पुरुषः एनम् आत्मानम् अविनाशिनम् = विनाशः प्रमाणेन रज्जुसर्पादेरिव सत्ताबाधः द्रव्यगुणादिभिः परिच्छेदः, तदभावोऽस्यास्तीति अविनाशी परिपूर्णः तम्। अजं जन्मादिसर्वविकाररहितम् तं वेद जानाति। स पुरुषः सर्वात्मभावं गतः विद्वान् कथं केनप्रकारेण कं पुरुषं हन्ति = हननक्रियां करोति कं पुरुषं घातयति हननक्रियां प्रवर्तयति ॥ २१ ॥

(मू. गी.) वेदाविनाशिनं नित्यं य एनमजमव्ययम्।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥

(वेदगी.) यो मर्त्येष्वमृतं ऋतावा देवो देवेष्वरतिर्निधायि।
होता यजिष्ठो मह्ना शुचध्यै हव्यैरग्निर्मनुष ईरयध्यै, ऋ॰ मं॰ ४ अनु॰ १ सू॰ २ मं॰ १

य इति = योऽग्निः जीवात्मा, देवः ज्ञानेन दीप्यमानः, मर्त्येषु मरणधर्मपदार्थे देहादिषु अमृतः मरणधर्मरहितः। ऋतावा सत्यवान् सत्यस्वरूपः नित्य इत्यर्थः। देवेषु अरतिः = देवेषु इन्द्रियेषु तद्विषयेषु रतिरहितः निःस्नेहः इतियावत्। यद्वा देवेषु विद्वत्सु अरतिः अभिगन्ता विद्वत्संगमनशीलः "अरतिः ऋ गतौ" बहिवस्यार्तिभ्यश्च — इत्यनेन अतिप्रत्ययः। निधायि निहितः इति जानाति। स च होता भक्षयिता "हु दानादनयोः"। यजिष्ठः भगवत्पूजकः। मह्ना स्वकीयेन तेजसा शुचध्यै दीपितुं निधायि स्थापितः। स च समदुःखसुखत्वात् देदीप्यमानः आस्ते। "शुच दीप्तौ तुमर्थे कध्यैप्रत्ययः, किञ्च स च पुरुषः हव्यैः हवनसाधनवस्तुभिः मनुषः मनुष्यस्य (मानुष्य) ईरयध्यै स्वर्गं प्रति प्रेरणाय ~~कथं भवतीति अध्याहार्यम्~~ ॥ २ ॥
निधायि इत्यस्य स्थापितः

वासांसीति = यथा येन प्रकारेण नरः मनुष्यः जीर्णानि खण्डितानि वासांसि वस्त्राणि विहाय त्यक्त्वा अपराणि ~~[illegible]~~ तद्भिन्नानि नवानि नूतनानि वस्त्राणि ~~देही जीवात्मा~~ गृह्णाति परिदधाति। तथा तेनैव प्रकारेण देही देहोऽस्यास्तीति देही जीवात्मा स्वयमविकारात्मना स्थितः जीर्णानि कालकर्मवशात् त्याज्यतां प्राप्तानि शरीराणि विहाय त्यक्त्वा अन्यानि नामरूप जातिगुणविशेषैः पूर्वविलक्षणानि संयाति प्राप्नोति न तु स्वयं विकृतो भवति ॥ २२

(मू॰ गी॰) वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ २२ ॥

(वेदगी॰) अनच्छये तुरगातु जीवमेजद्ध्रुवं मध्य आ पस्त्यानाम्। अथ॰ कां॰ ९ अनु॰ ४ सू॰ १० मं॰ ८
जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ऋ॰ मं॰ १ अनु॰ २२ सू॰ १६४ मं॰ ३०

यद्वा

"स नु वस्त्राण्यधपेशनानि वसानः अग्निः नाभा पृथिव्याः अरुषः जातः पदे इळायाः पुरोहितः राजन् यक्षि इह देवान् — ऋ॰ अष्ट॰ ६ अध्या॰ ५ व॰ २९ मं॰ ६ (मं॰ ३ १० सू॰ १ मं॰ ६

अनच्छये इति = पस्त्यानां प्राणिशरीराणां मध्ये अनत् प्राणं धारयन् तुरगातु प्रचलन् जीवं जीवनशक्तियुतम् एजत् कार्यशीलम् परं ध्रुवं स्थिरः एभिर्गुणैः युक्तः आत्मा आशये वसति। अयं जीवात्मा मर्त्येन सयोनिः मर्त्यशरीरेण सह समाने योनौ उत्पन्नोऽपि अमर्त्यः मरणधर्मरहितः नित्य इत्यर्थः। अयम् आत्मा मृतस्य मृतप्राणिनः जीवः आत्मा स्वधाभिः मृत्योरनन्तरं निजधारकशक्तिभिः सह चरति अपरस्मिन् देहे परिभ्रमति ॥ १६४ इत्ये मंत्रे श्रीसायणाचार्यः एवं व्याचष्टे = अनेन देहस्य असारता जीवस्य नित्यत्वञ्च प्रतिपाद्यते। इदं शरीरं जीवाऽवस्थायाम् अनत् प्राणनं कुर्वत् जीवं जीवनवत् तुरगातु त्वरयापाराय तूर्णगमनं सत् एजत् कम्पमानं सत् ध्रुवम् अविचलितं सत्। पस्त्यानां गृहाणां मध्ये अग्रेतेषु आशेते स्थाणुवत् तिष्ठति। आकारः पूर्णो वा जीवस्य वैलक्षण्यमाह - मृतस्य शरीरस्य सम्बन्धी जीवः मर्त्येन मरणधर्मकेन शरीरेण सयोनिः पूर्वं समानोत्पत्तिस्थानः। यद्यपि जीवस्य

नैनमिति = शस्त्राणि शस्यन्ते छिद्यन्ते पदार्था एभिः इति शस्त्राणि असयादयः देहवत् एनम् आत्मानं न छिन्दन्ति अवय-
वविश्लेषं न कुर्वन्ति। पावकः अग्निः अपि देहवत् एनम् आत्मानं न दहति दहनक्रियायाः अविषयत्वात् भस्मीकर्तुं न
शक्नोति। आपः जलम् अपि एनम् आत्मानं देहवत् न क्लेदयन्ति, आर्द्रतामापाद्य सावयवस्येव निरवयवस्यात्मनः शै-
थिल्यं संपादयितुं न शक्नुवन्ति। मारुतः वायुरपि एनम् आत्मानं न शोषयति शोषणक्रियायाः अगोचरत्वात् एनं शुष्की
कर्तुं (शोषयितुम्) न शक्नोति ॥२३॥

(मू० गी०) नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः॥२३

(वेदगी०) युष्माकं बुध्ने अपां न यामनि विथुर्यति न मही श्रथर्यति।
विश्वप्सुर्यज्ञो अर्वागयं सु वः प्रयस्वन्तो न सत्राच आगत॥ ऋ० अ० ४·८
अध्या० ३ वर्ग १० मं० ४ मंड० ५ सू० ८७ मं० ४

युष्माकमिति = हे मरुतः!!! हे जीवात्मानः!!! युष्माकं बुध्ने संघातात्मके देहे अयम् आत्मा न विथुर्यति न व्यथते। तथा च
अयम् आत्मा अपां जलानां यामनि मार्गे न विथुर्यति न व्यथते। अयम् आत्मा मही महत्वात् मही इत्युच्यते महीव पृ
थिव्यादिवस्तुवत् न श्रथर्यति न विशीर्णो भवति। यज्ञः "यज्ञो वै विष्णुः", विष्णोरंशः, तथा यद्वा ईश्वरपूजकोऽय
मात्मा विश्वप्सुः विश्वरूपः अयमात्मा वो युष्माकम् आत्मानात्मविवेकवताम् अर्वाक् अभिमुखम् सु सुष्ठु गच्छति
अतः यूयं प्रयस्वन्तः प्रयत्नशीलाः परिष्कर्तार इव सत्राचः सहचिन्तकाः आगत आगच्छत यद्वा। "सत्रं यज्ञो
यज्ञो विष्णुः" ते अञ्चन्तीति सत्राचः विष्णुप्राप्तिचिंतासक्ताः आगत संसारे आगच्छन्ति। यद्वा आगत आ
गच्छत परस्परं संगता भवत। एतदर्थसूचकः मंत्रः यजु० अध्या० २३ मं० १६ "न वा एतन्म्रियसे न रि-
ष्यसि देवान् इदेषि पथिभिः सुगेभिः। यत्रासते सुकृतो यत्र ते ययुः तत्र त्वा देवः सविता
दधातु॥"

१८

अच्छेद्य इति = सनातनः सदातनः सनातनः सदाभवनशीलः अत एव नित्यः नित्यत्वादेव सर्वगतः परिपूर्णः। अतः स्थाणुः स्थिरस्वभावः, अत एव अचलः, अयम् आत्मा, अच्छेद्यः छेत्तुमशक्यः, अदाह्यः, दग्धुमशक्यः, अक्लेद्यः क्लेदयितुमशक्यः, अशोष्यः ~~अ~~ शोषयितुमशक्यः एव भवति। २४

(मू.श्लो.) अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः॥२४॥

(वेदगी.) पञ्चारे चक्रे परिवर्तमाने तस्मिन्नातस्थुर्भुवनानि विश्वा।
तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः॥

ऋ. अष्ट. २ अध्या. ३ सू. १६ मं. १३, अथ. कां. ९ अनु. ५ सू. ~~१४~~ मं. ११

ऋ. १.१६४. मं. १३
अथ. ९.४.१२

पञ्चारे इति = पञ्चारे पञ्च ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च सर्वभूतानि पञ्च अराः चक्राणि यस्मिन् तस्मिन् पञ्चारे पञ्चेन्द्रिय चक्रवति चक्रे परिवर्तनशीले देहे, परिवर्तमाने पुनरावर्तमाने सति, तस्मिन् देहचक्रे विश्वा विश्वानि भुवनानि भूतजातानि प्राणिमात्राणि आतस्थुः तिष्ठन्ति वर्तन्ते इत्यर्थः। तस्य चक्रस्य मध्ये वर्तमानः अयम् आत्मा अक्षः अविनाशी ~~मर्त्येष्वमर्त्यस्वरूपः~~, भूरिभारः सकलदेहवहनेन प्रभूतभारोऽपि न तप्यते दाहक्लेदादिभिः न पीड्यते। अपि च अयमात्मा सनात् एव, सनातन एव, अत एव सनाभिः समाननाभिकः सर्वदैकरूपनाभिः न शीर्यते, न भिद्यते। यथा च लोके रथाक्षाः भारेण भग्ना भवन्ति। अक्षघातेन च नाभिः विवृतो भवति तद्वत् अयमात्मा देहचक्रे छिद्यमाने क्लिद्यमाने दह्यमाने सत्यपि न छिद्यते न क्लिद्यते, न दह्यतेऽतोऽयम् ~~नित्य~~ आत्मा नित्यः देहः अनित्यः २३

अव्यक्त इति = अव्यक्तं व्यज्यते इति व्यक्तं शरीरं तद्भिन्नम् अव्यक्तं सूक्ष्मतरम्। अतोऽयमात्माऽचिन्त्यः इन्द्रियागोचरः। अयम् आत्मा अविकार्यः निरवयवत्वात् विकृतेरविषयः उच्यते कथ्यते। यस्मादेवंविधः आत्माऽस्ति तस्मात् तत्कारणात् त्वम् एवं यथोक्तलक्षणम् एनम् आत्मानं विदित्वा ज्ञात्वा नाऽनुशोचितुम् अर्हसि। अहमेतेषां हन्ता मया एते हन्यन्ते इति पूर्ववच्छोकं कर्तुं त्वं नार्हसीति भावः। २५।

(भू. गी.) अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते।
तस्मादेवं विदित्वैनं नाऽनुशोचितुमर्हसि॥ २५॥

(वेदगी.) को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था बिभर्ति।
भूम्या असुरसृगात्मा क्वस्वित्को विद्वांसमुपगात्प्रष्टुमेतत्॥ ४॥

ऋ. अष्ट. २ अध्या. ३ व. १९ मं. ४ ऋ. मं. १ सू. १६४ मं. ४ अथर्व ९। ९। ४

क इति = प्रथमं मुख्यतमम् अनादिभूतम् आत्मानं जायमानम् आविर्भवन्तं को ददर्श को द्रष्टुं शक्नुयात् तस्य अव्यक्तत्वात् कोऽपि तं द्रष्टुं न शक्नोति। यत् यस्मात् कारणात् अनस्थाः न तिष्ठतीति अस्थाः न अस्थाः अनस्थाः नित्यः अविकार्योऽयमात्मा अस्थन्वन्तम् अस्थिमन्तं शरीरं पृथिव्यादिसंघात्मकं देहं बिभर्ति धारयति। भूम्याः पार्थिवस्थूलशरीरस्य असुः प्राणः बलरूपत्वेन धारकः। असृक् = न सृज्यते इतररागवत् संसृज्यते सहजत्वात् न + सृज् क्विन् प्रत्ययः, देहादिरागरहितः आत्मा जीवात्मा क्वस्वित् कुत्राऽस्ते = अतोऽचिन्त्योऽयम्। कः त्वद्विधः शिष्यः विद्वांसम् आत्मज्ञानिनम् अन्यं गुरुम् एतत् जीवात्मविषयिकं प्रष्टुम् उपगात् उपगच्छति॥ ४
न तत्र चक्षुर्गच्छति न वाग्गच्छति न मनो न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितादथो अविदितादधि इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे॥ केनोप. खं. १ मं. ३

अथेति= हे महाबाहो! हे अर्जुन! अथ अथवा एनम् उक्तम् आत्मानं नित्यजातं "यदा यदा देहोत्पत्तिस्तदा तदा देहेन सह सद्यः जायते, देहे मृते सति तेन सह म्रियते। एवंविधं नित्यजातं नित्यं मृतं मन्यसे। तथाऽपि तस्मिन् पक्षेऽपि "नाहं वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान्" इति रीत्या शोचितुं नार्हसि॥ २६

(मू. गी.) अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्।
तथापि त्वं महाबाहो! नैवं शोचितुमर्हसि॥२६॥

(वेदगी.) अयं पन्था अनुवित्तः पुराणो यतो देवा उदजायन्त विश्वे।
अतश्चिदा जनिषीष्ट प्रवृद्धो मा मातरममुया पत्तवे कः॥१
ऋ. अष्ट. ३ अध्या. ५ व. २५ मं. १ मं. ४ सू. १८ मं. १

अयमिति= अयं प्रत्यक्षेण उपलभ्यमानः पन्था योनिनिर्गमनरूपो मार्गः जन्म पुराणः अनादिः, अनुवित्तः सर्वैः जायमानैः लब्धः। यतः यस्मात् [redacted] योनिमार्गात् विश्वे देवाः सर्वे विद्वांसः अविद्वांसः जीवात्मानः उदजायन्त उत्कर्षेण उत्पन्ना भवन्ति। तस्मात् मार्गात् सर्वेषां प्राणिनां सकृत् असकृत् वा जन्म आवश्यकमस्ति। अतश्चित् अस्मात् योनिमार्गादेव प्रवृद्धः गर्भे संसारे वा प्रकर्षेण वृद्धिं गतः आ जनिषीष्ट आसमन्तात् जायतात् उत्पद्यते। अमुया ~~...~~ मातरं शोकमातरं शोकमापकं ज्ञानं पत्तवे पतनाय मरणाय मा कः मा कुरु। अर्थात् जन्मानन्तरं मरणमावश्यकमतः शोकः व्यर्थ एवेति दिक्॥ १॥

जातस्येति = हि यस्मात् कारणात् जातस्य उत्पन्नस्य पदार्थस्य मृत्युः मरणं ध्रुवः अनपायी आवश्यक इतियावत् । तथा मृतस्य पञ्चत्वं गतस्य पदार्थमात्रस्य जन्म पुनर्जननं ध्रुवं नियतम् । एवं जन्ममरणयोः मरणजन्मनोः अहोरात्रयोरिव नियमः नियतः अपरिहार्यः परिहर्तुमशक्यः । तस्मात् कारणात् अपरिहार्ये दूरीभवितुमशक्येऽर्थे त्वं शोचितुं नार्हसि ॥ २६

(मू·गी·) जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥२६

(वेदगी·) मृत्युरीशे द्विपदां मृत्युरीशे चतुष्पदाम् ।
तस्मात् त्वां मृत्योर्गोपते उद्भरामि स मा बिभेः ॥

अथ· कां· ८ अनु· १ सू· २ मं· २३ पद्धू "यस्त्वा मृत्युरभ्यधत्त जायमानं सुपाशया ,, अथ· कां· ३ सू· ११मं· ८

मृत्युरिति = द्विपदां द्वौ पादौ येषां ते द्विपदः, तेषां द्विपदां मनुष्यपक्ष्यादीनां मृत्युः सर्वप्राण्यप्राणिसंहर्ता ईशे ईष्टे स्वामी भवति । तथा चतुष्पदां गवाश्वादिप्राण्यप्राणिनां मृत्युः विनाशः ईशे ईष्टे स्वामी भवति । द्विपच्चतुष्पदां प्राणिनां स्थावरजंगमानां पदार्थानां च मृत्युरवश्यं भवतीति भावः । नहि मृत्युम् अपलपन् कश्चिदपि प्राणी दृश्यते ऋते मुमुक्षोः । यस्मादेवमस्ति तस्मात् कारणात् त्वाम् जीवात्मानं गोपतेः गावः पशवोऽभिधीयन्ते । पशवो द्विपदश्चतुष्पदश्च, तेषामुभयेषां पतिः, तादृशात् मृत्योः सकाशात् उद्भरामि उद्धरामि ज्ञानवीर्येण इत्यभिप्रायः सः त्वं मृत्युभीतः मृत्योः भये प्राप्तः सन् मा बिभेः भीतिं मा कार्षीः ॥ २३ ॥ य इति = यः मृत्युः जायमानं जन्मग्रहणतम् त्वा त्वां प्राणिनं सुपाशया उत्तमेन पाशेन अभ्यधत्त सर्वतः बध्नाति ,, ८ ॥

अव्यक्तादीनीति = नामरूपगुणादिभिर्न व्यज्यते इत्यव्यक्तम्, अव्यक्तम् आदिः येषां तानि अव्यक्तादीनि, भूतानि भवन्तीति भूतानि शरीराणि। व्यक्तमध्यानि व्यक्तं व्यक्तता मध्ये येषां तानि व्यक्तमध्यानि देवतिर्यङ् मनुष्याः ब्राह्मणः क्षत्रिय इति मध्ये लब्धस्वरूपाणि भूतानि। अव्यक्तनिधनानि अव्यक्ते स्वाधिष्ठाने ब्रह्मणि निधनं लयो येषां तथाविधानि भूतानि भवन्ति। तत्र मिथ्याभूतेऽर्थे का परिदेवना कः परितापः अस्ति। २८।

(भू॰ गी॰) अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥

(वेदगी॰) तमिद् गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे
अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि
तस्थुः। यजुः १७। ३० ऋ॰ अष्ट॰ ८ अध्या॰ ३ व॰ १७ मं॰ ६ मंड॰ १० सू॰ ८२ मं॰ ६

तमिद्गर्भमिति = आपः आदिसृष्टिभूताः पदार्थाः संसारावस्थाम् आप्ताः ~~जीवाः~~ पदार्थमात्राः, तम् इत्, तं परमात्मानम् एव गर्भं सर्वलोकानाम् उत्पत्तिस्थानं प्रकृत्यारंभं प्रथमं विस्तृतं दध्रे आश्रयत्वेन दध्रे दधिरे धारयन्तीत्यर्थः ~~धारयन्ति~~ विभ्रति। यत्र परमेश्वरे देवाः दिव्यात्मानः ~~योगिनः~~ सर्वपदार्थाः इतियावत् समगच्छन्त सम्यक् प्राप्नुवन्ति सर्वे मध्यावस्थायां दृश्यमानाः स्वकारणे लयन्ति। विश्वे सर्वे पदार्थाः प्राणिनश्च अजस्य जन्मरहितस्य अनादेः जीवस्य, अव्यक्तस्य च नाभौ मध्ये अधिष्ठातृत्वेन सर्वेषु विराजमानम् एकं स्वयंसिद्धम् अर्पितम् प्रार्पितं स्थितं। यस्मिन् ब्रह्मणि विश्वानि अखिलानि भुवनानि लोकजातानि अधितस्थुः अधितिष्ठन्ति। सर्वे पदार्थाः ब्रह्मणि लीनत्वात् आदौ अव्यक्ताः ब्रह्मप्राप्तौ अपि अव्यक्ताः, मध्ये व्यक्ताः। तत्र का परिदेवना स्यादिति भावः।

आश्चर्यवदिति = बहुषु नरेषु कश्चित् नरः एनम् आत्मानम् आश्चर्यवत् "लोके कर्तुमशक्यस्य कर्मणः करणम् आश्चर्यम्" तद्वत् पश्यति निरीक्षते। तथैव अन्यः नरः पूर्वोक्तलक्षणविभिन्नः आश्चर्यवत् एव अद्भुतमिव वदति कथयति। अन्यः अपरः नरः पूर्वोक्तलक्षणविभिन्नः आश्चर्यवत् एव एनम् आत्मानं शृणोति। कश्चित् नरः श्रुत्वाऽपि सहस्रधा श्रवणं कृत्वाऽपि एनम् आत्मानं न वेद नैव जानाति ॥ २९

(मू. गी.) आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥ २९

(वेदगी.) शिवास्त एका अशिवास्त एकाः सर्वा बिभर्षि सुमनस्यमानः।
तिस्रो वाचो निहिता अन्तरस्मिन् तासामेका विपपातानु घोषम् ॥
अथ. कां. ७ अनु. ४ सू. ४४ मं. १

शिवा इति = हे मनुष्य! ते तव एका वार्ताः शिवाः कल्याणकारिण्यः यद्वा "शिव! शिव! इत्याश्चर्यमय्यः सन्ति। ते तव जीवस्य एकाः वार्ता अशिवाः अकल्याणकारिण्यः सन्ति। त्वं तस्य आत्मनः चेतनतां पश्यन्नपि आश्चर्यवत् वदसि। तथा च त्वं सर्वाः वार्ताः सुमनस्यमानः सुमन इव आचरन् "आचारार्थे कर्तुः क्यङ्" कल्याणाकल्याणोक्तेर्वाक्यश्रवणेऽपि सौमनस्यं प्राप्नुवन् बिभर्षि धारयसि अर्थात् आश्चर्यवत् शृणोषि। तिस्रः वाचः वाण्यः दर्शनकथनश्रवणरूपा इति यावत्। अस्मिन् पुरुषे अन्तः देहमध्ये निहिताः अवस्थिता भवन्ति। तासां शिवाशिवानां वाणीनां मध्ये एका वार्ता ज्ञानरूपा घोषं सहस्रधाश्रवणजन्यं शब्दमनु विपपात विरुद्धा: पतिता अर्थात् सहस्रधाश्रवणेऽपि एनम् आत्मानं नैव जानाति" तथा च, "उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः॥ ऋ. अष्ट. ८ अध्या. २ व. २३ मं. ४ अर्थ:
त्वः एकः कश्चित् वाचम् = वक्तारम् आत्मानं पश्यन् + उत मनसा पर्यालोचयन्नपि (न ददर्श) जीवात्मनः तत्त्वं न पश्यति। (त्वः) कश्चिदेकः (एनाम्) जीवात्मनः वहनधावनभाषणश्रवणादिशक्तिं शृण्वन् कर्णाभ्यां शृण्वन्नपि न शृणोति न आकर्णयति (त्वस्मै उत) कस्मैचित्
तत्त्वजिज्ञासवे पुरुषाय हस्तामलकवत् तन्वम् स्वविस्तृत शरीराश्रयं (विसस्रे) प्रकाशयति। जायेव = यथा सुवासाः शोभनवस्त्रा उशती पतिं कामयमाना जाया भार्या निजभर्तारमभिगच्छति ॥ ४ ॥ २३

देहीति = हे भारत! हे अर्जुन! देही उपलब्धिस्थानत्वेन सर्वे देहाः अस्य सन्तीति देही सर्वदेहोपाधिमान् अयम् आत्मा। सर्वस्य ब्रह्मादिस्तम्बपर्यन्तस्य प्राण्यप्राणिजातस्य देहे वध्यमानेऽपि नित्यं सर्वदा स्वयम् अवध्यः अहिंस्य एव भवति। तस्मात् आत्मनोऽविनश्वरत्वविज्ञानात् सर्वाणि भीष्मादिसर्वाणि भूतानि शरीराणि "एते म्रियन्ते" इति त्वं न शोचितुमर्हसि। एतेषु हन्यमानेषु आत्मा [redacted] न नश्यति इत्यात्मनः नित्यत्वज्ञानात्त्वमुद्दिश्य शोकं मोहं च कर्तुं नार्हसीत्यर्थः। ३०॥

(मू॰ गी॰) देही नित्यमवध्योऽयं देहे सर्वस्य भारत।
तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥३०॥

(वेदगी॰) आ पप्रौ पार्थिवं रजो बद्बधे रोचना दिवि।
न त्वावाँ इन्द्र कश्चन न जातो न जनिष्यतेऽति विश्वं ववक्षिथ ॥ ऋ॰ अष्ट॰ १ अध्या॰ ६ वर्ग॰ १ मं॰ ५ ऋ॰ मं॰ ३ १ सू॰ ८१ मं॰ ५

आ पप्राविति = हे इन्द्र! हे आत्मन्! त्वं स्वव्याप्त्या पार्थिवं पृथिव्याः सम्बन्धि रजः रजन्त्यस्मिन् इन्द्रिययूथमिति रजः लोकः "लोकः रजांसीत्युच्यन्ते" पार्थिवं लोकं देहम् आपप्रौ आपूरयसि आपूरितवान् असि, देहस्य स्वामी इन्द्रः आत्मा इतिभावः। तथा दिवि अन्तरिक्षे हृदयाकाशे रोचना रोचमानानि ज्ञानानि बद्बधे बबंध, स्थापितवान् असीतिभावः। बद्बधे = बध- बंधने लिटि व्यत्ययेन हलादिशेषाऽभावः। हे आत्मन्! त्वावान् त्वत्सदृशः "युष्मदस्मदोः छन्दसि सादृश्य उपसंख्यानम्" इति वतुप् "आसर्वनाम्नः" इत्यात्वम्। अन्यः कोऽपि पदार्थः न जातः न उत्पन्नः अतः त्वं अजोऽसि तथा न जनिष्यते उत्पत्स्यमानोऽपि नास्ति यदात्मनः मृत्युः नास्ति तदा उत्पत्तिः कथं स्यात् इतिभावः। तादृशः त्वं विश्वं सर्वं रक्षितव्यं जगत् अतिववक्षिथ अतिशयेन वोढुम् इच्छसि सर्वेषां देहानां वाहकोऽसि। अतोऽयमात्मा अजः नित्यः एवमात्मेति बोद्धव्यम्॥ ३१५

स्वधर्ममिति = "युद्धं स्वधर्मो नृपतेः" इत्यादि शास्त्रोक्तं क्षत्रियस्य कर्तव्यत्वेन विहितं धर्मं च-तु अवेक्ष्य स्वबुद्ध्या विचार्य त्वं विकम्पितुं स्वधर्माच्चलितुं नार्हसि, स्वधर्मं त्यक्तुं नार्हसीति भावः। धर्म्यात् धर्मशास्त्रात् आगतं धर्म्यं कर्तव्यत्वेन विहितं तस्मात् युद्धात् अन्यत् अपरं श्रेयः कल्याणकरं साधनं यद्वा श्रेयः कल्याणं न विद्यते नास्ति ३१

(मू. गी.) स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते। ३१॥

(वेदगी.) युध्मो अनर्वा खजकृत् समद्वा शूरः सत्राषाड् जनुषेमषाळ्हः।
व्यास इन्द्रः पृतनाः स्वोजा अधा विश्वं शत्रूयन्तं जघान" ऋ. अष्ट. ५ अध्या. २ व. २४ मं. ३
ऋ. मंड. ७ सू. २० मं. ३

युध्म इति = युध्मः योद्धा क्षत्रियः अनर्वा "[illegible]" युद्धेषु अपराङ्मुखः खजकृत् युद्धकृत् "खले खजे" इति युद्धनामसु पाठः। समद्वा समत् कलहः तद्वान् इत्यत्र समद्धशब्दात् मतुप्प्रत्ययः। शूरः शौर्योपेतः जनुषा जन्मना स्वभावत एव सत्राषाट् बहूनाम् अभिभविता। अषाळ्हः = स्वयञ्च केनापि अनभिभूतः। स्वोजाः सुबलः। ईम् = अयम् इन्द्रः आत्मा क्षत्रियात्मा इतिभावः पृतनाः शत्रूणां सेनाः व्यास विक्षिपति पराभवतीतिभावः। अध अपि च शत्रूयन्तं शात्रवम् आचरन्तं विश्वं सर्वं शत्रुमंडलं जगत् जघान हन्ति। एतदर्थप्रतिपादकः मंत्रः ऋ. अष्ट. ४ अ. ४ व. १९ मं. २ "व्रतेन स्थ ध्रुवक्षेमा धर्मणा यातयज्जना। नि बर्हिषि सदतं सोमपीतये" व्रत इति =
ऋ. ५ सू. ७२ मं. २

क्षत्रियाणां तथा कृत्वा समरे देहपातनम्। अधर्मः क्षत्रियस्यैष यः
शय्यायां मरणं भवेत् २, विसृजन् श्लेष्ममूत्राणि कृपणं परिदेवनम्" म. भा. शां. ९७। २३
अविक्षतेन देहेन प्रलयं योऽधिगच्छति। क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः" म. भा. शां. ९७। २४
न गृहे मरणं तात क्षत्रियाणां प्रशस्यते। शौण्डीराणामशौण्डीर्यमधर्म्यं कृपणं च तत्" महा. शां. २५
संग्रामेष्वनिवर्तित्वं प्रजानां चैव पालनम्। न निवर्तेत संग्रामात् क्षात्रं धर्ममनुचरन्" ९७। २५
धर्मलाभोऽर्थलाभश्च यशोलाभस्तथैव च। यः शूरो वध्यते युद्धे विमर्दन् परवाहिनीम्॥ यो यत्तंसंघैरसुपता च ते

यदृच्छयेति = हे पार्थ! हे पृथायाः पुत्र! हे अर्जुन! यदृच्छया यत्नं विना, अकस्मादेवेति भावत्। उपपन्नं प्राप्तम्। अपावृतम् = उद्घाटितकपाटं स्वर्गद्वारं स्वर्गप्राप्तिद्वारभूतं ~~[illegible]~~ ईदृशं युद्धं सुखिनः पुण्यात्मानः धन्या इतियावत् क्षत्रियाः क्षात्रधर्मोपपन्नाः पुण्येन लभन्ते ॥ ३२॥

(मू. गी.) यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।
सुखिनः क्षत्रियाः पार्थ! लभन्ते युद्धमीदृशम् ।३२॥

(वेदगी.) ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः। ⌐ अथ. कां. १८ अनु. २ सू. २ मं. १८
ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात्। ऋ. अष्ट ८ अध्या. ८ व. १३ मं. ३
अथर्व कां. १८ सू. २ मं. १७ ऋ. मं. १०. सू. १५४ मं. ६. तै. आ. ६।३।२

ये युध्यन्त इति = प्रधनेषु ~~[illegible]~~ प्रकीर्णानि अस्मिन् धनानि भवन्तीति प्रधनाः संग्रामाः तेषु प्रधनेषु संग्रामेषु शूरासः शौर्यवन्तः योद्धारः ये युध्यन्ते शत्रुभिः सह युद्धं कुर्वन्ति शत्रून् संप्रहरन्तीति भावः। ये च शूराः क्षत्रियाः तनूत्यजः तत्र युद्धे स्वशरीराणां त्यक्तारो भवन्ति। ये वा ये च सहस्रदक्षिणाः सहस्रदक्षिणान् क्रतून् अनुष्ठितवन्तः। तान् सर्वान् एवं हे शूर क्षत्रिय! त्वमपि गच्छतात् गच्छ। येषु उत्तमेषु लोकेषु ते निवसन्ति तं लोकं प्राप्नुहीत्यर्थः। ३॥ पराशरस्मृतिः ३।३।२६ "यं यज्ञसंघैस्तपसा च विप्राः स्वर्गैषिणो वाऽत्र यथैव यान्ति। क्षणेन यान्त्येव हि तत्र धीराः प्राणान् सुयुद्धेन परित्यजन्तः॥

अथ चेति = अथ अधुना युद्धसन्नाहसमनन्तरं त्वम् इमं धर्म्यं धर्मत्वेन दृष्टं धर्मादनपेतमित्यर्थः संग्रामं न करिष्यसि चेत्। ततः तदकरणेन स्वधर्मं स्वस्य धर्मं कीर्तिं यशः हित्वा त्यक्त्वा पापम् अवाप्स्यसि न तु संग्रामफलमिति भावः। ३३॥

(भ॰गी॰) अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि॥ ३३

(वेदगी॰) वि दुर्गा वि द्विषः पुरो घ्नन्ति राजान एषाम्।
नयन्ति दुरिता तिरः ऋ॰ अष्ट॰ १ अध्या॰ ३ व॰ २२ मं॰ ३
मं॰ १ सू॰ ४१ मं॰ ३

विदुर्गेति = राजानः क्षत्रियाः एषां युद्धस्य सेनापतीनां पुरः पुरस्तात् दुर्गा - दुर्गाणि कठोराणि शस्त्राणि विघ्नन्ति विशेषेण नाशयन्ति। तथा द्विषः शत्रून् अपि विघ्नन्ति विशेषेण नाशयन्ति। तथा दुरिता दुरितानि शत्रुकृतानि दुर्गमनानि अस्त्राणि क्लेशान् वा तिरो नयन्ति विनाशं प्रापयन्ति। (स्वधर्मपरित्यागजनकीर्तिनयनानि दुरितानि)
एवम्भूतयुद्धाऽकरणे स्वधर्मपरित्यागजनितापकीर्तिर्भवतीति भावः॥ दुर्गा = दुःखेन गच्छन्त्यत्र दुर्गाणि "सुदुरोरधिकरणे" इति गमेर्डप्रत्ययः। "शेश्छन्दसि बहुलम्" इति शेर्लोपः। पुरः = कालवाचिना पूर्वशब्दात् सप्तम्यर्थे "पूर्वाधरावराणामसि पुरधवश्चैषाम्" इत्यसिप्रत्ययः। तत्संनियोगेन पूर्वशब्दस्य पुरादेशश्च। घ्नन्ति = हन्तेर्दादित्वात् शपो लुक् "गमहनेत्यादिना उपधालोपः "हो हन्तेः पा॰ ७।३।५४ इति घत्वम्॥

अकीर्तिमिति = भूतानि सर्वत्र सर्वे जनाः ते तव अव्ययाम् चिरकालस्थायिनीम् अकीर्तिम् स्वधर्मत्यागात्प्रजनितापयशः कथयिष्यन्ति। संभावितस्य सर्वत्र सर्वैः ईडितस्य अकीर्तिः अपयशः च नु मरणात् मृत्योः अतिरिच्यते अधिको भवति ॥ ३४ ॥

(भ.गी.) अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४

(वेगी.) यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु।
मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से ॥ ऋ. मं. १०
ऋ. अष्ट. ८ अध्या. १ व. १५ मं. २ श.प. ११।६।१।१। सू. ५४ मं. २

यदचर इति = हे इन्द्र! हे अभिमन् (दाक्षिण्या)! तन्वा शरीरेण (स्वशक्तिप्रभावेण) वावृधानः वृद्धिं (कीर्त्यभिवृद्धिः) प्राप्नुवन् जनेषु प्राणिषु बलानि स्वसामर्थ्यानि प्रब्रुवाणः प्रकर्षेण कथयन् यत् संग्रामे अचरः त्वं कृतवान्। ते तव सा कीर्तिः मायाइत् माया एव वृथैव। यतः सम्प्रति भवान् युद्धं न कुरुते। अद्य इदानीं शत्रुं हन्तव्यं शत्रुं न विवित्से न लभसे। ननु इति प्रश्ने किं पुरा पूर्वस्मिन् काले शत्रुम् अलभथाः तदपि नेत्यर्थः अतः सम्प्रति युद्धात् उपरमसेऽतः पूर्वोपार्जिता कीर्तिरपि नंक्ष्यतीति ज्ञेयम् ॥ २ ॥

भयादिति = महारथाः द्रुपदभगदत्तादयः शूराः भयात् भयेन हेतुना रणात् युद्धात् उपरतं दूरीभूतं त्वां मंस्यन्ते निश्चेष्यन्ति। येषां महारथानां त्वं बहुमतः शौर्यादिभिर्गुणैरुत्कृष्टः इति बहुमानं गमितः "रणम् यात् पलायते„ इति लाघवं लघुत्वम् अवमतिं यास्यसि प्राप्स्यसि ॥३५॥

(भ॰ गी॰) भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ३५

(वे॰ गी॰) दूरे तन्नाम गुह्यं पराचैर्यत्त्वा भीते अह्वयेतां वयोधै।
उदस्तभ्नाः पृथिवीं द्यामभीके भ्रातुः पुत्रान् मघवन्
तित्विषाणः „ ऋ॰ अष्ट॰ ८ अध्या॰ १ व॰ १६ मं॰ १ ऋ॰ १० सू॰ ५५ मं॰ १

दूरे इति = हे मघवन्! हे बलवन्! मघमिति धननाम हे धनबल! हे क्षत्रियात्मन्! यत् यदा ~~त्वा~~ त्वां भीते भीतानि "वचनव्यत्ययः„ भययुतानि सर्वाणि भूतजातानि त्वत्सैनिकवृन्दानि वयोधै स्वायुषः रक्षणाय जीवनधारणाय वा त्वा त्वां क्षत्रियात्मानं अह्वयेताम् आह्वयन्ति। तदानीं त्वं तेनैव शरीरेण अभीके "अन्तिकनामैतत्„ स्वसमीपे एव पृथिवीं द्यां पृथिवीवासिनः जीवान् अन्तरिक्षवासिनः वायुयानस्थान् जीवान् श्चे - भ्रातुः पुत्रान् सर्वे जीवाः आत्मत्वेन तव भ्रातर एव सन्ति, अतः सर्वान् भ्रातुःपुत्रान् स्वजीवान् तित्विषाणः दीपयन् उत्सुकान् कुर्वन् उत ऊर्ध्वं सर्वानूर्ध्वत्वेन अस्तभ्नाः स्तम्भितवान् असि। सम्प्रति तत् ते नाम पराचैः त्वं भीतोऽसि अतः रणात् उपरतः „ इति त्वत्तः पराङ्मुखैः योद्धृभिः गुह्यं गुप्तं केनचिदप्यप्रकाशनीयमिति विचार्य दूरे विप्रकृष्टे भविष्यति। कस्यापि मुखे तव नाम कीर्तित्वेन स्थापनीयं भविष्यति ॥२॥

अवाच्यवादानिति = अहिताः दुर्योधनकर्णादयः शत्रवः तव सामर्थ्यं समर्थस्य भावः सामर्थ्यं पौरुषं बलं वा निन्दन्तः रणात् पलायितवतः तव शौर्यं किमिति कुत्सयन्तः सन्तः अवाच्यवादान् वक्तुमनर्हान् अवाच्यान् वादान् धिक्शब्दपूर्वकान् बहून् अनेकधा दूषणशब्दान् इतो वदिष्यन्ति। ततः मर्मघातिभ्यो दूषणवचनेभ्यः दुःखतरं क्षत्रियस्य अभिमानिनः शूरस्य किं नु किमस्ति। ३६॥

(मू॰गी॰) अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥३६॥

(वेदगी॰) या शशाप शपनेन याऽघं मूरमादधे
या रसस्य हरणाय जातमारेभे तोकमत्तु सा॥ अथर्व॰ ५ अनु॰ ५ सू॰ २८ मं॰ २

"या इति = या क्षत्रियजनता त्वां शपनेन नाशहेतुभूतेन परुषवाक्येन अवाच्यवादेनेति भावः शशाप = शापम् अवाच्यवादं कृतवती। शपनेन = शप आक्रोशे, करणे ल्युट्। या क्षत्रियजनता मूरं त्वयि मूर्च्छाकरम् अघं पलायनरूपं पापं "मूरम् मूर्च्छा = मोह समुच्छ्राययोः" "क्विप् च" इति क्विप् "राल्लोपः" इति छकारस्य लोपः। आदधे परिजग्राह। याऽपरा क्षत्रियजनता जातम् उत्पन्नं त्वदुत्पन्नं बलं रसस्य शरीरगतस्य बलतत्त्वस्य हरणाय पानकरणाय विनाशनायेति भावः। आरेभे उपचक्रमे। सा सकला क्षत्रियजनता तोकम् अपत्यम् स्वकीयम् अपत्यं स्वोत्पन्नं बलाऽपत्यम् अत्तु भक्षयतु न च त्वत्सामर्थ्यमिति भावः। २॥

हतोवेति = युद्धे कर्णादिभिः हतः त्वं स्वर्गं प्राप्स्यसि। जित्वा शत्रून् विजित्य वा महीं निष्कंटकं महीराज्यं भोक्ष्यसे। यस्मात् उभयथा युद्धं सफलमेव। तस्मात् कारणात् युद्धाय एव कृतनिश्चयः सन् हे कौन्तेय! हे अर्जुन! उत्तिष्ठ सन्नद्धो भव। ३८।

(मू. गी.) हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्
तस्मादुत्तिष्ठ कौन्तेय! युद्धाय कृतनिश्चयः ॥ ३८॥

(वेद गी.) ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि
ऋ. मं. ४ सू. ४ मं. ५ शत्रून् ॥ ऋ. अष्ट. ३ अध्या. ८ व. २२ मं. ५ यजु. १३।१३

हे अग्ने! हे राजन्! ऊर्ध्वो भव शत्रुहननार्थम् उद्युक्तो भव उर्ध्वस्तिष्ठेत्यर्थः। स्थित्वा प्रतिविध्य हन्तून् शत्रून् प्रति ताडय युद्धात् शान्तो मा भव। अध्यस्मात् अस्मत्तोऽपि अधिकं दैव्यानि दिव्यकर्माणि दिव्यतेजांसि वा आविष्कृणुष्व आविष्कुरु प्रकाशीकुरुष्व इत्यर्थः। यातुजूनां यातयितुं प्राणिनः क्लेशयितुं जवं जवनं कुर्वन्ति तेषां यातुधानानां जवनप्रधानानां शत्रूणां स्थिरा स्थिराणि दृढानि शस्त्राणि अवतनुहि अवतारय। बन्धुमित्रान् शत्रून् च प्रमृणीहि प्रमारय। म.उ. प्राणत्यागे यद्वा भ्रातृन् [illegible] शत्रून् पूर्वमपहृतः तमेवंभूतान् शत्रून् प्रमृणीहि जहि। प्रहतोऽयमित्युपेक्षां मा कृथाः। यातुजूनां जु गतौ क्विप् क्वचित्। इत्यादिना किप् दीर्घौ। "आमि छन्दसो नुम्" तथा च "अभितिष्ठ पृतन्यतो अधरः सपत्ना अभि यानो अरातयः अभि पृतन्यन्तं तिष्ठाभि यो नो दुरस्यति॥ ऋ. अष्ट. [illegible] ४ मं. [illegible]। [illegible] राजानमुपदिशति = याः यावन्मात्राः नः = अस्माकं राजन्य अरातयः कुटिलाः शत्रवः अधिताः सन्ति, तथा "सपत्नान् = युद्धे उपस्थितान् सकलान् शत्रून् (अभितिष्ठ = पराभूय अभितिष्ठ = संमुखे स्थितो भव। यः शत्रुः नः अस्माभिः सह यद्वा अस्मान् दुरस्यति = दुष्टतायाः व्यवहारं करोति। पृतन्यन्तम् = महतीं सेनामादाय आक्रमणकारिणम् अभि + अभितिष्ठ युद्धाय संमुखे तिष्ठ भयं मा कुरु"॥ ३२ ३२

सुखदुःखे इति = लाभजययोः फलं सुखम्। अलाभस्य अजयस्य च फलं दुःखम्। ते लाभजयजन्यसुखालाभाजयजन्यदुःखे समे तुल्ये कृत्वा समबुद्धिः भूत्वा इत्यर्थः। ततस्तदनन्तरं युद्धाय स्वधर्मानुष्ठानाय युज्यस्व यतस्व। एवं प्रकारेण त्वं पापं न अवाप्स्यसि। ३८

(मू० गी०) सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥३८॥

(वेदगी०) शेरभक[1] शेरभ[2] पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनः।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त ॥ १ ॥
अथ० कां० २ अनु० ४ सू० २४ मं० १

शेरभक इति = हे शेरभक! स्वाश्रितानां सुखस्य प्रापक! हे शेरभ! हे सर्वेषां हिंसक! वः युष्मदीयाः यातवः शत्रूसीयानां विचाराः पुनः यन्तु भूयः भूयः निःसरन्तु अपगच्छन्तु इत्यर्थः। त्वयि त्वज्जन्यं दुःखं मा भवतु। तथा हेतिः हननसाधनं युष्मदीयम् आयुधजातं पुनर्यन्तु स्वक्षत्रियधर्मपरिपालनाय प्रतिनिवर्तताम् त्वद्युद्धविचाराः पुनरागच्छन्तु। आयुधादिघातजन्यपापेभ्यस्तव निवृत्तिरस्तु इतिभावः। किमीदिनः, किम् इदानीं वर्तते किमिदं किमिदं वा इति किमीदिनः अनुखदुःखरूपस्य समीपे स्थ भवथ। तं विचारं अत्त भक्षय विनाशयेतिभावः। यः सुखदुःखमयविचारः वः युष्माकं पार्श्वे प्राहैत शत्रुभिः प्रेषितः तं भयात्मकं विचारमपि अत्त भक्षय विनाशय दूरीकुरु इतिभावः। स्वा = स्वानि स्वकीयानि मांसानि[3] सुखदुःखस्वरूपमांसानि अत्त भक्षय अर्थात् सुखदुःखयोः समो भूत्वा स्वकर्तव्याय युद्धाय आत्मानं युज्यस्व ततः क्षत्रियधर्मत्वात् पापरहितोऽसि त्वमिति भावः ॥ १ ॥

(१) शेरभक = शेते, रमते, भजते, कक्ते, शयनारम्भभजनगत्यर्थकधातुभ्यः आदीन् वर्णान् आदाय शेरभकः सिध्यति।
(२) शेरभ = शृ हिंसायां भा दीप्तौ धातुभ्यां शेरभशब्दसिद्धिः (३) मांसानि = मांसं माननं वा मानसं वा मनोऽस्मिन् सीदतीति ॥

नेहाभीति = इह कर्मयोगे अभिक्रमनाशः, अभिक्रमः उपक्रमः, कर्मणः आरंभः तस्य नाशो नास्ति। कृष्यादौ आरब्धे सति बीजं कुचित् फलति क्वचिच्च न फलति, न तथेदम्। किन्तु नियतफलवद्भवति। प्रत्यवायः = संध्यादि नित्यकर्माकरणात् यत्पापं भवति स च प्रत्यवायः। परन्तु स च प्रत्यवायोऽत्र कर्मयोगे नैव भवति। अस्य भक्त्या क्रियमाणस्य धर्मस्य कर्मयोगस्य स्वल्पमपि स्वल्पमात्रमपि महतो भयात् जननमरणदुःखभयात् त्रायते रक्षति ॥ ४० ॥

(मूलगी०) नेहाऽभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥

(वेदगी०) इयमेषाममृतानां गीः सर्वताता ये कृपणन्त रत्नम्।
धियं च यज्ञं च साधन्तस्ते नो धान्तु वसव्यमसामि ॥ ३ ॥
ऋ० अष्ट० ८ अध्या० २ व० ५ मं० ३ ऋ० मं० १० सू० ७४ मं० ३

इयमिति = इयम् सरणिः अयं कर्मयोगमार्गः अमृतानां विदुषां गीः वाक् वचनमिति यावत् अस्तीति शेषः। ये जनाः पूर्वोक्तं विद्वद्वचनं सर्वताता सर्वतातौ कर्मयज्ञे रत्नं ज्ञानरत्नं कृपणन्त प्रयच्छन्ति। अथ च धियं ज्ञानलक्षणां बुद्धिं यज्ञं च कर्मयज्ञं च साधन्तः साध्नुवन्तः सन्ति। ते कर्मयोगकर्तारः वसव्यं वसुसमूहं वासार्हं वा नः अस्मदर्थे भगवदर्थे असामि बहु यथा स्यात्तथा धान्तु = धारयन्तु ॥ ३ ॥ श्री:

व्यवसायात्मिकेति = हे कुरुनन्दन! हे अर्जुन! ईश्वर एवाऽस्माकं परा गतिः, इति व्यवस्थितः व्यवसायः निश्चयो यस्यां सा व्यवसायात्मिका वस्तुतत्त्वनिश्चयवती ईश्वराश्रया बुद्धिः इह मोक्षैकप्रयोजने एकैव बहिरन्तरतः सदैकरूपा एव भवति। अव्यवसायिनां विवेकबुद्धिरहितानां व्यवस्थाशून्यानामेव कामिनां बुद्धयः बहुशाखाः बहुप्रकाराः अत एव अनन्ताः भवन्तीति शेषम् ४१

(मू॰ गी॰) व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१

(वेदगी॰) अनुमतिः सर्वमिदं बभूव यत् तिष्ठति चरति यदु च विश्वमेजति
तस्यास्ते देवि सुमतौ स्यामाऽनुमते अनु हि मंससे नः ॥ ६
अथ॰ कां॰ ७ अनु॰ २ सू॰ २३ मं॰ ६

अनुमतिरिति = यत् जगत् तिष्ठति वृक्षगुल्मादिस्थावररूपेण वर्तते। यत् जगत् चरति मनुष्यपश्वादिचररूपेण वर्तते ~~यत्~~ उ, च, अपि च यत् ~~जगत्~~ विश्वं सर्वं जगत् एजति व्यवसायात्मिकया बुद्ध्या चेष्टते। इदं सर्वम् अनुमतिः परिपूर्णः ईश्वर एक एव इति सर्वैः स्वीकृता मतिः बुद्धिः एकाऽएवास्ति। हे देवि! व्यवसायात्मिकप्रकाशस्वरूपबुद्धे! तस्याः ते व्यवसायात्मिकाया एव ते तव सुमतौ एकस्यामेव ~~बु~~ व्यवसायात्मिकायां बुद्धौ स्याम भवेम। अव्यवसायात्मिकायां बुद्धौ मा भवेम। हे अनुमते! हे सर्वस्वीकृते व्यवसायात्मिके बुद्धे! हि यस्मात् कारणात् नः अस्मान् व्यवसायात्मिकबुद्धिधारकान् अनु मंससे अनुमन्यसे "मन्यतेः पञ्चमलकारे" सिप् बहुलं ~~छन्दसि~~ लेटि, इति सिप्। अव्यवसात्मिके बुद्धिमन्तः पुरुषाः त्वत्तः विमुखाः वर्तन्ते ॥ ६ अथ॰ कां॰ ७ अनु॰ २ सू॰ २३ मं॰ ६।

हे पार्थ!

यामिमामिति = हे अर्जुन! उच्यन्ते इति वादाः वाक्यानि, वेदस्य वादाः वेदवादाः तेषु अर्थवादादिवाक्येषु रता निरताः, तत्रैव तास्थवन्तः इत्यर्थः। नान्यदस्तीति वादिनः "कर्म तत्फलेभ्यः साधनसाध्येभ्योऽन्यदपि कर्मफलप्रदाता ईश्वरो वा मोक्षो वा किञ्चिन्नास्तीति प्रवृत्त्यो वक्तारः वदनशीलाः अविपश्चितः वेदानामुपक्रमोपसंहारयोः तात्पर्यानभिज्ञाः बहिर्मुखाः मीमांसकाः पुष्पितां पुष्पैः मल्लिकालतावत् "अपाम सोमममृता अभूम," "दक्षिणवन्तोऽमृतत्वं भजन्ते," इत्याद्यर्थवादलक्षणैः फलशून्यैः रञ्जयन्तीम् इमां वाचं प्रवदन्ति ४२॥

(मूलगी.) यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
वेदवादरताः पार्थ! नान्यदस्तीति वादिनः॥४२

(वेदगी.) अदान्यान्त्सोमपान् मन्यमानो यज्ञस्य विद्वान्त्समये न धीरः।
यदेनश्चकृवान् बद्ध एष तं विश्वकर्मन् प्रमुञ्चा स्वस्तये॥३।
अथ. कां. २ अनु. ६ सू. ३५ मं. ३

अदान्यानिति = यज्ञस्य = क्रियाग्रहणं कर्तव्यम् इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी। यज्ञस्य यज्ञमित्यर्थः। यज्ञं वैदिकसकामक्रियाकलापं विद्वान् जानन् धीरः "वेदार्थवादात्मिकां बुद्धिं राति ददाति इति धीरः वेदार्थवादबुद्ध्युपदेष्टा सोमपान् सोमयागानुष्ठायिनः पण्डितान् अपि ^(चिंव) अदान्यान् सकामकर्मजालबद्धत्वेन अज्ञत्वारोपणेन च दानायोग्यान् अप्रशंसनदानायोग्यान् मन्यमानः स्वीकुर्वन्। तत्र दृष्टान्तः। समये न धीरः। समयन्ति संगच्छन्ते योद्धारोऽत्र इति समयः संग्रामः तत्र धीर इव "नकार उपमार्थीयः उपरितनत्वात्। यत् "एनः आ समन्तात् इनः ईश्वरः कर्मफलप्रदः नास्ति "कर्मैव सुगतिं प्रयच्छन्तीति, इत्यादि सकामकर्ममोहजालात्मकेन वेदार्थवादेन बद्धः बन्धनं प्राप्तः ^(एषः) एनः एतद्विधं केवलं कर्म एव, ईश्वरः नास्तीत्येवंविधं पापं चकृवान् करोति। हे विश्वकर्मन्! विश्वं कर्म करणीयं यस्य सः तादृशरूप! परमात्मन्! तं सकामकर्मप्रतिपादकं वेदवादरतं ये अज्ञानिने पुरुषं स्वस्तये तत्कल्याणाय प्रमुञ्च तस्मात् पापात् प्रमोचय।३॥

कामात्मान इति = स्वर्गपराः स्वर्गसुखोपभोग एव परो निरतिशयः पुरुषार्थ इति निश्चयो येषां ते स्वर्गपराः। भोगैश्वर्यगतिं प्रति भुज्यन्ते इति भोगाः दिव्याः स्रक्चंदनादयः, तेषां सम्यग्भोगाय ऐश्वर्यं स्वामित्वं तस्य गतिः प्राप्तिः, तां प्रति कामात्मानः = काम इच्छावेगाः बुद्धौ येषां ते कामात्मानः विषयभोगलम्पटाः, क्रियाविशेषबहुलाम् = क्रियाविशेषाः अग्निष्टोमातिरात्रादयः फलविशेषहेतवो बहुलो बहवो यया प्रतिपाद्यन्ते सा क्रियाविशेषबहुला, ताम् अत एव जन्मकर्मफलप्रदां जन्मनः प्रतिपादितकर्मणां फलानि, जन्मकर्मफलानि, अनुष्ठातृभ्यः प्रददातीति जन्मकर्मफलप्रदां तां वाचं वदन्तीति पूर्वेणान्वयः ४३

(मू॰ गी॰) कामात्मानः स्वर्गपराः जन्मकर्मफलप्रदाम्।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३॥
(वे॰ गी॰) यज्ञपतिमृषय एनसाहुर्निर्भक्तं प्रजा अनुतप्यमानम्।
मथव्यान् स्तोकानप यान् रराध सं नष्टेभिः सृजतु विश्वकर्मा। २
अथ॰ कां॰ २ अनु॰ ६ सू॰ ३५ मं॰ २

यज्ञपतिमिति = ऋषयः अतीन्द्रियार्थदर्शिनः वेदस्य वास्तविकतत्त्वज्ञातारः तत्त्वज्ञानिन इति यावत्। यज्ञपतिं ज्योतिष्टोमातिरात्रादियज्ञानां पालकं यजमानम्। एनसा "इत्थंभावे तृतीया" एनसा युक्तम् एनस्विनं पापकर्तारम् आहुः कथयन्ति। यतस्ते सर्वे सकामकर्मकर्तृत्वेन विषयभोगलम्पटा वर्तन्ते। प्रजाः अस्य यागवैकल्यनिमित्तेन एनसा परितप्यमानाः प्रजाः निर्भक्तम् निर्भाग्यं दौर्गत्ययुक्तं परमात्मभक्तिभावशून्यम्। अनुतप्यमानम् = जगति भूयो भूयो जन्ममरणभावेन दुःखितं यज्ञपतिं सकामयज्ञकर्तारं यजमानम् एनसा = एनसा युक्तम् आहुः। अथ च मथव्यान् मन्थनयोग्यान् परमात्मविज्ञानलवान् यान् स्तोकान् स्तोकमात्रानपि अपरराध = अपराद्धवान् अन्तरितकृतवान् अतिक्रान्तवान्। विश्वकर्मा विश्वमेव कर्म यस्य तथाभूतः विश्वकर्मा परमात्मा तेभिः स्तोकैः ज्ञानलवैः नः अस्मदीयं यज्ञपतिं संसृजतु संयोजयतु। येन यज्ञकर्ता सकामयज्ञान् त्यक्त्वा ज्ञानयज्ञं कुर्यात् येन मुक्तो भवेदित्यर्थः ॥ २॥

× संवितवान्

भोगैश्वर्येति = तया कर्मकाण्डलक्षणया वाचा अपहृतचेतसाम् अपहृतं तिरोभावितं चेतः कार्याकार्यविवेकज्ञानं येषां तेऽपहृतचेतसः विषयैः भ्रान्तबुद्धयः तेषां भोगैश्वर्यप्रसक्तानां भोग्यपदार्थजन्यसुखलम्पटानां समाधौ समाधीयते पुरुषो विषयेषु अनेन इति समाधिः यद्वा वासनात्मना जगत् सर्वं समाधीयते पुरुषेण अस्मिन्निति समाधिः अन्तःकरणं तस्मिन् समाधौ व्यवसायात्मिका निश्चयात्मिका बुद्धिः कर्मयोगबुद्धिः न विधीयते न प्रवेश्यते ॥ ४४ ॥

(मू. गी.) भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम्।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४

(वेद. गी.) ये भक्षयन्तो न वसून्यानृधुर्यानग्नयो अन्वतप्यन्त धिष्ण्याः।
या तेषामवया दुरिष्टिः स्विष्टिं नस्तां कृणवद् विश्वकर्मा ॥ १ ॥ अथ. कां. २ अनु. ६ सू. ३५

ये इति = ये वयं वसूनि लौकिकभोग्यपदार्थान् भक्षयन्तः अयागार्थेन व्ययेन नाशयन्तः न आनृधुः = समृद्धा न अभूम। यद्वा ये वयं "भक्षयन्तो न„ उपमार्थीयः नकारः। लौकिकभोग्यपदार्थान् अदन्त इव आनृधुः वर्धितवन्तः। लौकिकपदार्थविषयभोगेन वृद्धाः स्म, न तु अलौकिकपरमात्मज्ञानतत्त्वेनेति। "ऋधु वृद्धौ - अस्मात् लिटि द्विर्वचने "अत आदेः„ इत्यभ्यासदीर्घत्वे "तस्मान्नुड् द्विहलः„ इत्यत्र ऋकारैकदेशस्य रेफस्य हल्ग्रहणेन ग्रहणात् "द्विहल्त्वेन नुडागमः। धिष्ण्याः = धिष्ण्येषु स्थानेषु स्थिता अग्नयः आहवनीयाद्याः अन्तःकरणशुद्धिपूर्वकपरमपदप्राप्तिकारकाः यान् सकामकर्मकर्तॄन् भोगविषयलम्पटान् उद्दिश्य अन्वतप्यन्त अनुतापं कुर्वन्ति। यागादौ सकामकर्मकर्तृत्वेन यागवैकल्यात् तेषां धनवतां जन्म व्यर्थम् अहो शोच्या एते इति। एवम् अयष्टारः दुर्यष्टारश्च। तेषां द्विविधानाम् अस्माकं या अवया अवयजनं यागाऽननुष्ठानं दुरिष्टिः दुर्यागश्च स्वर्गादिकामनया यज्ञविधानम् अस्ति। विश्वकर्मा परमात्मा ताम् अनिष्टदुरिष्टिदोषपरिहारार्थं कृतां स्विष्टिं शोभनाम् इष्टिं परमात्मतत्त्वविवेकयज्ञं नः अस्मदर्थं कृणवत् करोतु। अवयाः "अवे यजः„ इति ण्विनि कृते "अवयाः श्वेतवाः —— „ इति निपातितः। अथ. कां. २ अनु. ६ सू. ३५ मं. १

त्रैगुण्येति — सत्त्वरजस्तमांसीति त्रिविधा गुणाः रागद्वेषलोभमोहादयः, तेषां तत्कार्याणां तत्फलानाञ्च समाहारस्त्रैगुण्यं संसारः। स एव विषयो गोचरो येषां ते त्रैगुण्यविषया वेदा इत्युच्यन्ते। हे अर्जुन! त्वं निस्त्रैगुण्यः त्रिगुणातीतः प्ररोचनश्रुतिभ्यः निष्क्रान्तो भव। निर्द्वन्द्वः = द्वन्द्वे नामरूपे, सुखदुःखे, रागद्वेषौ, तन्निर्गतो भव। नित्यसत्त्वस्थः = सतो भावः सत्त्वं "सदेव सोम्येदमग्र आसीत्," "ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः —" इत्युक्तेः सत्त्वं ब्रह्म, ब्रह्मस्वरूपे नित्ये, नित्यं यत्सत्त्वं तस्मिन्नेव तिष्ठतीति नित्यसत्त्वस्थः। एवंविधस्त्वं भव। निर्योगक्षेमः = अप्राप्तस्य वस्तुनः प्राप्तिः योगः, प्राप्तवस्तुनः संरक्षणं क्षेमः, तयोर्निर्गमं कृत्वा निर्योगक्षेमो भव। आत्मवान् = आत्मा ब्रह्माकारबुद्धिः सदा सैव अस्य अस्तीति आत्मवान् भव। ४५

(मू० गी०) त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन!।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्। ४५।

(वेदगी०) तिस्रो दंष्ट्राय निर्ऋतीरुपासते दीर्घश्रुतो वि हि जानन्ति वह्नयः। व० १६ मं० २
तासां नि चिक्युः कवयो निदानं परेषु या गुह्येषु व्रतेषु ॥ ऋ० अष्ट० ८ अध्या० ६
मं० १० सू० ११४ मं० २

तिस्र इति = निर्ऋतीः निःशेषेण ऋच्छन्ति गच्छन्ति प्रतिजीवं प्रतिवस्तु वा इति निर्ऋतीः गुणाः। यद्वा नियता ऋतिः घृणा संसारविरक्तानां यत्र सा निर्ऋतिः ताः। तिस्रः सृष्टिस्थितिसंहृतीः "सृष्टिः रजोगुणस्य, स्थितिः सत्त्वगुणस्य, संहृतिः तमोगुणस्य" ता त्रीणि अपि दंष्ट्राय[1] आत्मनः कर्मभोगदानाय उपासते ये जीवाः इति शेषः। ते पुरुषाः दीर्घश्रुतः[2] दीर्घं संसारं शृण्वन्तः मन्तव्यदृश्यादिपदार्थं जानन्तः, ईश्वरस्य वास्तविकतत्त्वज्ञानादिरूपमजानन्त इत्यर्थः अत एव वह्नयः संसारवासनायाः वोढारः विजानन्ति विगततत्त्वविज्ञाना भवन्ति। कवयः क्रान्तदर्शिनः तत्त्वज्ञानिनः तासां सृष्ट्यादीनां गुणसंहतीनां वा निदानं वास्तविककारणम् आत्मतत्त्वस्वरूपञ्च नि चिक्युः नितरां चिन्वन्ति जानन्ति। परेषु उत्कृष्टेषु गुह्येषु गोप्यव्येषु कर्मसु व्रतेषु = यमनियमादिव्रतेषु याः प्रवृत्तयः सन्ति तासां निदानं नि चिक्युः जानन्ति। नि चिक्युः = चिञ् चयने, लिटि "विभाषा चेः —" इत्यभ्यासादुत्तरस्य कवर्गादेशः। यद्वा "चायतेर्लिटि, "चायः की," इति छन्दसि "कीत्यादेशः। २॥

[1] अतः सत्त्वरजस्तमांसि
[2] दीर्घं कालं यावत् संसारं श्रृण्वन्तः

यावानितिः = यावान् यावत्परिमाणकः अर्थः प्रयोजनं सर्वतः संप्लुतोदके अभितः गतिशीलम् उदकं यत्र, यद्वा सर्वतः संप्लुते परिपूर्णम् उदकं यत्र, सर्वतः संप्लुतोदके अक्षीणजले इत्यर्थः। एवंविधे उदपाने "उदमुदकं पिबन्ति अस्मिन् इति उदपानं जलाशयः, तस्मिन् तिष्ठति। विजानतः विज्ञानिनः ब्राह्मणस्य ब्रह्मविदः यतः सर्वेषु वेदेषु ऋगादिचतुर्षु वेदेषु तावान् तावत्परिमाणकः अर्थः प्रयोजनं भवति। तथाऽपि मुमुक्षुनिमित्ते मोक्षोपयोगिवचनानि उपादेयानि भवन्त्येव ॥ ४६ ॥

(भ०गी०) यावानर्थ उदपाने सर्वतः संप्लुतोदके।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥

(वेदगी०) वेदेन रूपे व्यपिबत् सुतासुतौ प्रजापतिः। ऋतेन सत्यमिन्द्रियं
विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ यजु० १९।७८

वेदेनेति = प्रजापतिः प्रजायाः पतिः "प्रकर्षेण जायते मतिः अस्यामिति प्रजा तस्याः पतिः प्रजापतिः जीवात्मा ऋतेन सत्येन वेदेन ऋगादिवेदचतुष्टयेन सुतासुतौ प्रेरिताप्रेरितौ धर्माधर्मौ रूपौ सत्यानृतस्वरूपे व्यपिबत् विविच्य गृहीतवान् । तथा वेदेन ऋगादिवेदचतुष्टयहेतुभूतेन। इन्द्रस्य आत्मनः सत्यं सत्यधर्मादिचरणम् अन्धसः अन्नादेः विपानं विविधपाननिमित्तं शुक्रम् बलं सत्त्वगुणं वा इन्द्रियम् इन्द्रः आत्मा स येन ईयते मीयते इतीन्द्रियम् चक्षुरादिकम् ज्ञानकर्मसाधनम् इदम् जलम् "इदमित्युदकनाम, निघं० १।१२ पयः दुग्धं तण्डुलं वा अमृतं मुक्तिम् अमृतपदमिति वाच्यम् "वेदैश्च सर्वैः अहमेव वेद्यः इति। मधु माधुर्यादिगुणोपेतं विज्ञानञ्च व्यपिबत् गृह्णीयात् ॥ ७८ ॥

कर्मण्येवेति = ते तव अर्जुनस्य श्रुतिस्मृतिविहिते नित्ये नैमित्तिके च कर्मणि एव अधिकारः अस्ति योग्यता अस्ति नान्यत्र कर्मसंन्यासे। तत्फलेषु कदाचन मा तेऽधिकारः। कर्मफलहेतुः = कर्मणां फलेषु अपेक्षितेषु सत्सु स्वर्गकामी स्वर्गफलहेतुरिव त्वमेतत्कर्मफलहेतुः मा भूः। कर्मफलेषु अपेक्षावान् मा भव इत्यर्थः। अकर्मणि = अकर्म कर्मव्यतिरेकः क्रियात्याग इतियावत् तस्मिन् कर्मणि ते तव संगः मनःसक्तिः माऽस्तु अकरणे प्रत्यवायः तेन नैको दुर्योनिभ्रंश स्यात्। ४८।

(मू. गी.) कर्मण्येवाऽधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूः मा ते संगोऽस्त्वकर्मणि ॥४८॥

(वेद. गी.) कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ यजुः ४०.२

कुर्वन्नेवेति = नरः इह अस्मिन् जगति कर्माणि नित्यनैमित्तिकनिष्कामकर्माणि कुर्वन् एव विदधत् एव शतं समाः इत्युपलक्षणार्थम् यावदायुःपर्यवसानमित्यर्थः। जिजीविषेत् जीवनम् इच्छेत्। एवम् उक्तप्रकारेण मुक्तिनिमित्तं निष्कामकर्मकरणेन त्वयि नरे पुरुषे कर्म नित्यनैमित्तिक स्वाभाविक धर्मः न लिप्यते। त्वयि कर्मजन्यबन्धनं कदाऽपि न भविष्यति। इतः एवंविध प्रकारात् अन्यथा प्रकारान्तरं नास्ति, अतः कर्मफलं विहाय भगवदर्पणं कर्मकरणं सर्वथा श्रेयस्करम्। न तु क्रियात्यागः श्रेयस्करो भवति ॥ २॥

योगस्थ इति = हे धनञ्जय! हे अर्जुन! "निर्दोषं हि समं ब्रह्म", समस्य भावः समत्वम् तदेव ज्ञानेन युज्यते प्राप्यते इति योगः इत्युच्यते इति कथ्यते। योगस्थः "योगे ब्रह्मणि तिष्ठतीति योगस्थः मोक्षैककामः सन् त्वं सङ्गम् एतैः कर्मभिः मम दुरितक्षयोऽस्तु इत्यादि संगः कामः तं त्यक्त्वा सिद्ध्यसिद्ध्योः कार्यफलप्राप्तिः सिद्धिः, कार्यफलाऽप्राप्तिः असिद्धिः तयोः समः हर्षविषादशून्यो भूत्वा कर्माणि क्लेशात्मकानि अपि विहितानीति बुद्ध्या कुरु विधेहि ॥४८॥

(मू० गी०) योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनञ्जय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥४८॥ } अष्टा० गी० २ अ०

(वेद० गी०) सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताऽधि वाचि।
ऋ० अष्ट० ८ अध्या० २ व० २२ मं० २ (मं० १० सू० ७१ मं० २)

सक्तुमिवेति = यत्र यस्मिन् काले धीराः धीमन्तः विवेकिनः पुरुषाः तितउना = शूर्पेण सक्तुमिव धान्यविशेषमिव पुनन्तः शोधयन्तः भ्रष्टयवान् पृथक् कुर्वन्तः, एवं निष्कामकर्म द्वारा कर्मफलसंगं पृथक् कुर्वन्तः ज्ञानिनः जनाः मनसा शुद्धसंकल्पेन प्रज्ञया वा वाचं वाक्कर्माणि अक्रत कुर्वन्ति। अत्र एतस्मिन् समये सखायः समानख्यानाः शास्त्रप्रतिपादितसमत्वविषयज्ञानाः सख्यानि तेषु भवानि ज्ञानानि कर्माणि वा जानते जानन्ति। यद्वा सखायः = वाचा मिथः बद्धसख्याः सर्वैः समत्वमापन्नाः सख्यानि समत्ववाक्ययुक्तान् अभ्युदयान् लभन्ते इत्यर्थः तस्मात् एषां समत्वयोगे विचरतां जनानां वाचि वाक्शक्तौ भद्रा कल्याणस्वरूपा लक्ष्मीः सम्पत् निहिता स्थिताऽस्ति ॥२॥

दूरेणेति = हे धनञ्जय! हे अर्जुन! बुद्धियोगात् निष्कामकर्मयोगात् ज्ञानयोगादिति यावत् कर्म सकामकर्म दूरेण अत्यर्थं हि निश्चयेन अवरं निकृष्टमस्ति। फलहेतवः कर्मजन्यफलस्य स्वर्गस्य सुखस्य वा ऐहिकस्य हेतवः कर्मफलप्रार्थिनः कामिनः ये सन्ति। ते एव कृपणा अधमा नीचाः सन्ति। तस्मात् बुद्धौ सांख्यबुद्धौ चित्तप्रसादासादितज्ञानसंयोगे एव शरणम् वासं मनसा अन्विच्छ। तत्रैव मनः स्थापय। ४९॥ समेत जनपदान् अत्रो वित्तमाश्रित्य केवलम्। मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनञ्जयम्॥ महाभा. पर्व ४ अध्या. ४२ श्लो. १३

(मू. गी.) दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः॥४९॥

(वेद.) यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति।
यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य
पन्थाम्। ऋ. अ. ८.८ अध्या. २ व. २४ मं. ६ ॥ मं. १०. सू. ७१ मं. ६ ऐ. आ. ३.१.
तै. आर. १, ३, १; २, १५, १

यः पुरुषः सचिविदम् = योऽध्येता, स वेदस्य सखा तं वेदाऽभ्यासिनं वेत्ति इति सचिवचित् तं सचिविदं वेदाऽभ्यासिनं ज्ञानिनं सखायं सखिभूतं वेदं वा वेदप्रतिपादितं ज्ञानं तित्याज तत्याज, सकामकर्म विधत्ते निष्कामकर्म त्यजतीत्यर्थः। तस्य पुरुषस्य वाचि लौकिक्यां शास्त्रीयायां वाच्याम् अपि भागः भजनीयः कश्चित् अर्थः नास्ति। ईम् अयं लौकिको पभोगलोलुपः पुरुषः यत् वेदव्यतिरिक्तं लौकिकं कर्म शृणोति सुखसाधनभूतं श्रवणं कुरुते। तद् अलकम् अलीकं व्यर्थमेव शृणोति। हि यस्मात् कारणात् सुकृतस्य सुकर्मणः ज्ञानमार्गस्य पन्थाम् पन्थानम् नप्रवेद फलहेतुत्वेन कृपणत्वात् श्रद्धाराहित्याच्च ज्ञानाऽनुष्ठानमार्गं न जानाति तस्मात् तस्य वेदादिसच्छास्त्रश्रवणमपि व्यर्थमेव। ६ ५ को दरिद्रः विशालतृष्णः॥ स्वा. शंकराचार्यः। "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपणोऽथ यो वा एतदक्षरं विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मणः॥ बृह. उ. ब्रा. ८ मु. १.

बुद्धियुक्त इति। बुद्धियुक्तः बुद्ध्या निष्कामकर्मबुद्ध्या यद्वा ज्ञानबुद्ध्या युक्तः मिलितः निष्कामकर्मणो कर्ता इत्यर्थः। उभे सुकृतदुष्कृते नानायोनिसंस्कारजन्यपुण्यपापे परित्यजति। तस्मात् कारणात् त्वं योगाय निष्कामकर्मयोगाय ज्ञानयोगाय वा युज्यस्व। अतः कर्मसु पुण्यपापोभयात्मकेषु कर्मसु निवर्तितयोगेषु सत्सु योगः ज्ञानयोगः एव कौशलं कुशलमेव कौशलं नैपुण्यं ज्ञानकुशलैर्दृष्टं परमं साधनं तस्मात् योगाय युज्यस्व। ५०॥

(मू· गीता) बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।
तस्मात् योगाय युज्यस्व योगः कर्मसु कौशलम्॥ ५०॥

(वेदगी·) य इमे उभे अहनी पुर एत्यप्रयुच्छन्।
स्वाधीर्देवः सविता। ऋ· अष्ट· ४ अध्या· ४ व· २६ मं· ८
(ऋ· मं· ४ सू· ८२ मं· ८)

य इमे इति। यः सविता कर्मयोगस्य ज्ञानयोगस्य वा उत्पादकः जीवः स्वाधीः [v] (सु+आ+धीः = सु+आ+धीः) सर्वतः सम्यक् ध्यायन् सुबुद्धियुक्तः सुकर्मा वा [v] सन् इमे उभे अहनी रात्र्यहनी शुक्लकृष्णे पुण्यपापे सुकृतदुष्कृते ~~सः ... पुण्य पापयोः~~ पुरः पुरस्तात् [x] अप्रयुच्छन् [v] प्रमादम् अकुर्वन् एति संसारयात्रायां गच्छति, ~~तमेव ... वयम् आदृत्य~~ सः एव कुशलः पुरुषः ॥ ८ ॥
[v] अप्रयुच्छन् अथवा पुण्यपापयोः ग्रहणविमोचने प्रमादम् अकुर्वन्)
[x] आगमनसमये
[v] देवः ज्ञानयोगेन प्रकाशमानः
'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥' मुं· उ· खं· ३ श्रु· ३

अथवा बुद्धिर्भगवत्प्राप्ति ... निष्कामकर्मणि अत एव

कर्मजमिति = बुद्धियुक्ताः बुद्धिः सांख्यबुद्धिः ब्रह्मात्मैकत्वज्ञानं तया युक्ताः तन्निष्ठासम्पन्नाः ज्ञानयोगनिष्ठा इत्यर्थः। हि = खलु, मनीषिणः मनस ईषा मनीषा, मनीषाऽस्यास्तीति मनीषी ते मनीषिणः विद्वांसः, कर्मजं कर्मभ्यो जातं नानायोनिप्रापकं फलं जन्मादिलक्षणं त्यक्त्वा विहाय। जन्मबन्धविनिर्मुक्ताः = जन्मना बन्धः सम्बन्धो यस्य स जन्मबंधः देहः उत्तरकालभावी वर्तमानश्च तेन विनिर्मुक्ताः, कारणाऽभावात् द्वाविदेहसम्बन्धरहिताः सन्तः अनामयम् आध्यात्मिकादिसर्वोपद्रवरहितम् अखण्डानन्दैकरसं पदं = पद्यते ज्ञानेन प्राप्यते इति पदं परं ब्रह्म गच्छन्ति प्राप्नुवन्ति ॥५१॥

(मू० गी०) कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥५१॥

(वेद०) आ नयैतमा रभस्व सुकृतां लोकमपि गच्छतु प्रजानन्।
तीर्त्वा तमांसि बहुधा महान्त्यजो नाकमा क्रमतां तृतीयम्॥
अथ० कां० ९ अनु० ३ सू० ५ मं० १

हे परमात्मन्! वा हे ज्ञा०

आनयैतमिति = एतं निष्कामकर्मकर्तारं जनम् आनय स्वसमीपं ~~परमात्मा~~ ~~~~ प्रापय। हे जीवात्मन्! आरभस्व निष्कामकर्मणाम् आरंभं कुरु। यतः अजः जीवात्मा प्रजानन् निष्कामकर्ममार्गं जानानः सुकृतां लोकं सुकृतात्मनां धाम अपि एव गच्छतु प्राक्प्राप्तिकराणि ~~~~ बहुधा बहुप्रकाराणि स्वर्गादिविनश्वरलोमहान्ति तमांसि अधिकतरान्धकारमयानि सकामकर्माणि तीर्त्वा उल्लंघ्य ~~~~ तृतीयं नाके ~~~~ आनन्दमयं परंब्रह्म धाम गच्छतु प्राप्नोति। क्रमतां ~~~~ क्रमताम् = क्रमु पादविक्षेपे ~~~~ गच्छतु श्रुत्यन्तरेऽप्युक्तम्

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ॥ ऋ० अष्ट० १ अध्या० २ व० ७ अथ० ७।३।२६ सूरयः ज्ञानिनः दिवि आकाशे आततम् विस्तृतम् चक्षुः इव प्रतिरोधकवस्त्वभावे चक्षुर्दृष्टिरिव विष्णोः परमात्मनः तत् परमं पदम् मुक्तिधाम सदा ज्ञानदृष्ट्या सर्वत्र पश्यन्ति निरीक्षन्ते। "यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि" तै० उ० श्रु० २०।

यदेति = यदा यस्मिन् काले ते तव बुद्धिः मनीषा मोहकलिलं मोहो विचित्तता विषयजातं पदार्थपरिज्ञाने तदेव कलिलम् कालुष्यं विवेकबुद्धेः आवरणं व्यतितरिष्यति त्यक्ष्यति। तदा तस्मिन्नेव काले श्रोतव्यस्य श्रोतुमर्हस्य श्रुतस्य अकर्णितस्य द्रष्टव्यस्य दृष्टस्य च ज्ञातव्यस्य ज्ञातस्य च ग्रहीतव्यस्य गृहीतस्य च वस्तुनः मिथ्यात्वमेव विज्ञाय निर्वेदं वैराग्यं सर्वत्रालंबुद्धिलक्षणं गन्तासि प्राप्स्यसि ॥ ५२ ॥

(मू. गी.) यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२

(वेदगी.) यदि स्थ तमसाऽऽवृता जालेनाभिहिता इव।
सर्वाः संलुप्येतः कृत्याः पुनः कर्त्रे प्रहिण्मसि॥
अथ. कां. १. अनु. १ सू. १ मं. ३.

यदीति = यदि चेत् यूयं जीवाः तमसा अज्ञानेन आवृताः मिलिताः आच्छादिता इति यावत्। जालेन मोहकलिलेन अभिहिता इव बद्धा इव स्थ। यदि भवन्तः अज्ञानमोहजालसमावृताः सन्ति। तदा सर्वाः जन्मकर्मफलप्रदात्रीः कृत्याः कर्माणि संलुप्य संविनाश्य इतः अस्मात् मर्त्यलोकात् पुनः भूयः यूयं कर्त्रे ~~स्व~~ जगत्कर्तारं स्वामिनं परमेश्वरं प्रहिण्मसि प्राप्स्यथ। प्रहिण्मसि " इत्यत्र लकारस्य वचनस्य च व्यत्ययोऽस्ति ॥ ३.
यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षम् आनीय तं ततोऽतिजने विसृजेत् स यथा तत्र प्राङ् वा उदङ् वा अधराङ् वा प्रत्यङ् वा प्रध्मायीत अभिनद्धाक्षः आनीतः अभिनद्धाक्षः विसृष्टः, छान्दोग्योप. खं. १४ अध्या. ६ श्रु. १

श्रुतिविप्रतिपन्नेति = यदा यस्मिन् काले श्रुतिविप्रतिपन्ना कर्मज्ञानोपासनाप्रतिपादिकाः याः श्रुतयः सन्ति, ताभिः विप्रतिपन्नाः संशयाविष्टा बहुविक्षेपवती ते बुद्धिः निश्चला निर्विशेषा भूत्वा समाधौ समाधीयते चित्तम् अस्मिन् इति समाधिः परंब्रह्म, तस्मिन् तदाकारेणैव अचला अविक्रिया सती स्थास्यति स्थितिं प्राप्स्यति। तदा तस्मिन् काले योगं प्रज्ञास्थैर्यलक्षणं अवाप्स्यसि लप्स्यसे ।५३।

(मू.गी.) श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ।५३।
(वे.गी.) इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा संविशस्व।
संवेशने तन्वश्चारुरेधि प्रियो देवानां परमे जनित्रे॥ २दश. ३.१९
ऋ. अष्ट. ८ अध्या. १ व. १८ मं. १ अथ. कां. १८ अनु. ३ सू. ३ मं. ७ सामवे. १ प्र. २ अर्द्ध
ऋ. १० मं. ५६ सू. ५६ मं. १
(पर:) अग्रे

हे जीवात्मन्! ते तव इदं कर्मयोगात्मकं कर्म एकं जगति विद्यते। तथा ऊ = अन्यदपि ते तव एकं ज्ञानात्मकं कर्म तेन ज्ञानेन तृतीयेन ज्योतिषा परेशोपासनाऽखण्डाकारात्मनाऽपरेण तृतीयेन तेजसा संविशस्व परब्रह्मणि प्रवेशं कुरु। तन्वः संवेशने तस्मिन् ब्रह्मणि अखण्डाकारैकबुद्ध्या संप्रविश्य। "योऽहं सोऽसौ योऽसौ सोऽहम्," "योऽसावादित्ये पुरुषः सोऽसावहम् ओं खं ब्रह्म," यजुः ४०।१७ इति चारुः एधि कल्याणो भव। ईदृशः त्वम् "देवानां प्रियः परमे जनित्रे देवानां द्योतमानानां सर्वेषां पदार्थानां परमे उत्तमे जनित्रे जनके प्रियः प्रीयमाणः। १
सामवेदे तु "संवेशनस्तन्वे" इति पाठेऽयमर्थः। "तृतीयेन ज्योतिषा स्वात्मानं संशय संयोजय। एतः सूर्यगतचैतन्यात्मगत चैतन्ययोः कोऽपि भेदः नास्ति अतः तन्वे अस्मिन्नेव देहे परब्रह्मतत्त्वज्ञानोऽभ्यासानन्तरं "बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते," इत्युक्तेः पुनः शरीरग्रहणनिमित्ते (चारुः) सुन्दरकल्याणमयो भूत्वा (प्रियः) परमात्मप्रियः सन् एधि = वर्धि प्राप्नुहि। प्रीतिं कुर्वन् (देवानाम् परमे अत्युत्कृष्टे जनित्रे उत्पादके परब्रह्मणि संवेशनः सम्यक्तया प्रवेशं कुर्वन् एधि = भव। अथर्ववेदे "संवेशने तन्वा३ चारुरेधि प्रियो देवानां परमे सधस्थे," इति पाठे तु अयमर्थः = तृतीयेन ज्योतिषा परब्रह्मणा सह यद्वा ब्रह्मणा सह संवेशने = सम्यक्तया प्रविष्टे सति (परमे) अत्युत्तमे सधस्थे मुक्तपुरुषाणां निवासस्थाने अर्थात् मुक्तिधाम्नि (देवानां प्रियः) बुद्धिमतां ज्ञानिनां प्रियः सन् (तन्वा) निष्कामकर्मद्वारा अनेन वर्तमानदेहद्वारेणैव एधि = उन्नतिं प्राप्नुहि ॥ १। ॐ

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" मुण्ड. ३. खं. २ श्लो. ८ "परंब्रह्म सर्वात्मा विश्वरूपं महत्। स ब्रह्मा स शिवः स इन्द्रः सोऽक्षरः परमः स्वराट्" कैवल्यो. श्लो. ७

अर्जुन उवाच / समाधिस्थस्य

स्थितेति = हे केशव! हे कृष्ण! स्थितप्रज्ञस्य स्थितबुद्धेः का भाषा किं नाम, स्थितधीः निश्चलबुद्धिः किं प्रभाषेत किं वदेत किम् कथ
म् आसीत स्थितिं कुर्यात् किम् कथं व्रजेत प्रचलेत । श्रीभगवान् उवाच ।

प्रजहातीति = हे पार्थ! हे अर्जुन! मुमुक्षुः जनः समाधौ वर्तमानः मनोगतान् "मनसैवानुद्रष्टव्यम्" इत्यात्मस्वरूपप्रकाशनैककार
णे मनसि स्थितान् विषयान् सर्वान् सकलान् कामयन्तीति कामाः विषयभोगेच्छाः, तान् यदा यस्मिन् काले समाधिसि
द्ध्यवस्थायां प्रजहाति निःशेषं परित्यजति । आत्मने स्वस्वरूपे क्रीडन् आत्मना स्वस्वरूपेणैव तुष्टः स्वात्मानन्दरस
सन्तुष्टः भवति सः स्थितप्रज्ञः "अयं स्थिरबुद्धिः" इति पण्डितैः उच्यते कथ्यते ।

(मू. गीता) अर्जुन उवाच — स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥५४॥ श्रीभगवानुवाच
प्रजहाति यदा कामान् सर्वान् पार्थ! मनोगतान्।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥५५॥

(वेद.) अङ्गान्यात्मन् भिषजा तदश्विनात्मानमङ्गैः समधात् सरस्वती।
इन्द्रस्य रूपं शतमानमायुश्चन्द्रेण ज्योतिरमृतं दधानाः ॥ यजुः १९.९३

हे मनुष्याः! अंगानि योगांगानि आत्मन् आत्मनि भिषजा सद्वैद्यवद् दुःखघ्नौ तत् तौ अश्विनौ — अश्विनौ सिद्धसाधकौ योगाभ्या
सरसौ, आत्मानं स्वस्वरूपम् अंगैः योगांगैः समधात् समाधानं कुरुतः, सर्वत्र वचनव्यत्ययः । सरस्वती = इत्यत्रापि लिङ्गव्य
त्ययः सरस्वान् आत्मरसज्ञाता इन्द्रस्य परमैश्वर्यसम्पन्नस्य परमेश्वरस्य रूपं शतमानं शतम् असंख्यातं मानं
प्रस्य तत् यद्वा "बहुप्रतिमानम्" आयुः जीवनं मुक्तिं चन्द्रेण अत्यानन्देन ज्योतिः प्रकाशं परब्रह्मस्वरूपप्राप्तिप्रकाशम्
अमृतम् अविनाशि परमधाम दधानाः धारयन्तः निष्क्लेशाः भूत्वा सततं सुखिनो भवन्तीति ॥ १९।९३

तथा च "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः, अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" बृह. अध्या.
४ ब्राह्मण ४ श्रु. ७

दुःखेष्विति= दुःखेषु दुःखप्रापकेषु ज्वरशूलादिषु स्वयमुद्विग्नमनाः अनुद्विग्नं "किं करोमि क्व गच्छामीति विक्षेपन्यथाविधुरं मनो यस्य सोऽनुद्विग्नमनाः तथा सुखेषु सुखप्रापकेषु मिष्टान्नरसादिषु स्वयं प्राप्तेषु विगतस्पृहः विगता विशिष्य निर्गता स्पृहा रसनादीन्द्रियलौल्यं यस्य स विगतस्पृहः। वीतरागभयक्रोधः = उपकारिणि रागः, प्रीतिः, अपकारिणि क्रोधः। आसन्ने मरणहेतौ भयम् एतत् त्रयं स्वात्मनिष्ठया वीतं न प्राप्तं येन सः वीतरागभयक्रोधः। मुनिः श्रुतं दृष्टं स्पृष्टं सर्वं प्रत्याहृत्य ब्रह्मैव मनुते पश्यति जानाति स मुनिः ब्रह्मनिष्ठः यः सः स्थितधीः स्थितप्रज्ञः सिद्धः इत्युच्यते कथ्यते ॥५६॥

(मू. गी.) दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥५६॥
(वेदगी.) येन समत्सु सासहोऽवस्थिरा तनुहि भूरि शर्धताम्।
वनेमा ते अभिष्टिभिः। यजु: १५।४०

येनेति= हे जीवात्मन्! येन (जीवात्मना) सुखदुःखरागभयक्रोधादि समताप्रतापेन यद्वा सुखदुःखादिसमत्वमनसा समत्सु समत् संग्राम नाम तेषु (रागादिद्वन्द्वेषु) सुखदुःखरागभयक्रोधादिसंग्रामेषु सासहः स्यात् भृशं सोढा स्यात्। स त्वं भूरि शर्धताम् आत्मनि बहुलं ~~कुर्वतां~~ (प्राकृतिक) तेषां जीवात्मनां स्थिरा स्थिरभूतानि सुखदुःखरागद्वेषादीनि अवतनुहि मा प्रसारय तानि विनाशयेत्यर्थः। ते ~~सर्वे वयम~~ (तव) अभिष्टिभिः इच्छाभिः (रागभयक्रोधादि) वीतरागक्रोधादीच्छाभिः वनेम संभजेमहि। ४०.
(मिल) तेऽपि सेवनायं अर्थात् तेऽपि
स्थितधियः भवन्तु। ४०

य इति = यः पुरुषः सर्वत्र सर्वस्मिन् वस्तुनि तत्तत्प्राप्य = प्रियं (शुभं) सुखम् अप्रियं (अशुभं) दुःखं लब्ध्वा अनभिस्नेहः स्नेहरहितः राग विरहितः सन् न अभिनन्दति न प्रसीदति न द्वेष्टि न द्वेषं कुरुते। तस्य पुरुषस्य प्रज्ञा बुद्धिः प्रतिष्ठिता स्थिरा भवति।५७

(मू. गीता) यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाऽशुभम्।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७॥

(वेदगी.) बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधानाः।
यदेषां श्रेष्ठं यदरिप्रमासीत् प्रेणा तदेषां निहितं गुहाविः॥

ऋ. अष्ट. ८ अध्या. २ व. २३ मं. १ ऐत. आर. १।११।४४
मं ३. १० सू. ७१ मं. १ इत्यिदन!

बृहस्पते इति = हे बृहस्पते! हे अन्तरात्मन्! प्रथमम् उत्पत्यनन्तरमेव इतरवागुच्चारणात् प्रागेव नामधेयम् "ओम्" इति नाम दधानाः धारणं कुर्वन्तः उच्चारयन्त इत्यर्थः। यत = ये प्रमांसः अग्रं मुख्यं वाचः वाणीः प्रैरत प्रेरितवन्तः उच्चारयन्ति नान्यद्वचनमिति भावः। तथा एषां वीतरागभयक्रोधानां सर्वत्रानभिस्नेहानां श्रेष्ठं प्रशस्यतमं यत् अरिप्रं पापरहितं शुद्धमित्यर्थः जीवनमासीत् (अस्ति) विद्यते। एषां प्रतिष्ठितबुद्धीनां तत् ज्ञानं हर्षद्वेषरहितजीवनं वा गुहा गुहायां हृदयाकाशे निहितं गोप्यं सर्वत्राप्रकाश्यमित्यर्थः। प्रेणा = प्रेम्णा स्नेहेन आविः आविर्भवति ॥ १ ॥ तथा च "तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" बृहदारण्योपनिषद्. अध्या. ४ ब्रा० ३ श्रु. २१

यदेति = अयं ज्ञाननिष्ठायां प्रवृत्तः यतिः यदा यस्मिन् काले यथा कूर्मः कच्छपः अङ्गानि स्वावयवान् परेभ्यो भयात् सर्वशः सर्वाणि स्वस्मिन् उपसंहरते उपसंहारं करोति। तद्वत् इन्द्रियार्थेभ्यः तत्तद्विषयेभ्यः समाधिविघ्नभयात् इन्द्रियाणि वागादीनि चक्षुरादीनि च सर्वाणि यदा स्वस्मिन् उपसंहरते तदा तस्य यतेः प्रज्ञा बुद्धिः प्रतिष्ठिता भवति ॥ ५८ ॥

(मू. गी.) यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥

(वेदगी.) रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः।
अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥

५ सु सम्यक् सारथिः
^ बुद्धिः यस्य तथाभूतः

ऋ. अष्ट. ४ अध्या. ६ व. २० मं. १ यजुः २९. ४३ ऋ. मं. ६ । सू. ७५ मं. ६
तै. सं. ४।६।६।२ निरु. ९।१६

रथे इति = सुषारथिः सुशिक्षितः स्थिरबुद्धिः रथस्य देहस्य नेता ज्ञानवान् पुरुषः रथे देहे तिष्ठन् वर्तमानः पुरः पुरतोऽवस्थितान् वाजिनः वेगवतः अश्वसमानि इन्द्रियाणि यत्र यत्र यस्मिन् यस्मिन् सकामकर्मणि निष्कामकर्मणि वा तत्र तत्र स्वस्वान्तर्मुखानि नयति प्रापयति अर्थात् स्थितप्रज्ञः इन्द्रियाणि स्वायत्तानि कूर्मोऽङ्गानीव धारयति, न तु स्वयं तदनुचरः भवति। अभीशूनाम् = अभीशवः अभ्यश्नुवते। अभीशूनां महाप्रग्रहाणां इन्द्रियाणामित्यर्थः। महिमानं महत्त्वम् पनायत स्तुत। यतः तानि पराञ्चि अपि अन्तर्मुखानि ज्ञानिनः बलाद् भूवन्। रश्मयः इन्द्रियाणि विवेकिसारथिना प्रगृहीताः अर्थात् यानि इन्द्रियाणि देहे व्याप्य वर्तमानानि सन्ति। ते इन्द्रियरश्मयः पश्चात् देहे विद्यमानान् अश्वान् "इन्द्रियाणि मनः सारथिमनोऽनुकूलं ज्ञानिजनमनोऽनुकूलम् अनुयच्छन्ति अनुगम्य गच्छन्ति यथा च कठोपनिषदि" आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि। मनः प्रग्रहमेव च ॥ इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्। आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ कठ. १।३।३,४। "यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघनः एवानन्दमयो ह्यानन्दभुक्" माण्डू. उप. श्रु. ५

विषया इति = निराहारस्य आह्रियन्ते विषया यैस्ते आहारा इन्द्रियाणि नियमार्थं तेभ्यो निर्गतो यः स निराहारः इन्द्रियनिग्रहवान् तापस इत्यर्थः। तस्य देहिनः जीवात्मनः विषयाः रसादयः सर्वे रसवर्जं तत्तत्सूक्ष्ममात्रं विहाय विनिवर्तन्ते विशिष्य निवृत्ताः भवन्ति। अस्य निग्रहवतः रसोऽपि तत्तन्मात्राऽपि परं परमात्मानं दृष्ट्वा साक्षात्कारं कृत्वा निवर्तते निर्गच्छति ॥५९॥

(मू० गी०) विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥५९॥

(वेदगी०) दश राजानः समिता अयज्यवः सुदासमिन्द्रावरुणा न युयुधुः।
सत्या नृणामद्मसदामुपस्तुतिर्देवा एषामभवन् देवहूतिषु ॥८
ऋ० अष्ट० ५ अध्या० ६ व० ५ मं० ८ ॥ ऋ० मं० ७ सू० ८३ मं० ८

दशेति = हे इन्द्रावरुणा हे इन्द्रावरुणौ। हे इन्द्र! ~~परमैश्वर्यात्मन्~~! हे ~~प्रकाशात्मन्~~। जीवात्मन्! हे वरुण! वृणुते ज्ञानाज्ञानादिकमिति वरुणः श्रेष्ठतरो वा तत्सम्बुद्धौ हे वरुण! हे श्रेष्ठात्मन्! राजानः = ~~प्रकाश~~ स्वस्ववृत्त्या प्रकाशमानानि दश दशेन्द्रियाणि = पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मिलित्वा दश भवन्ति। स्वस्वविषयग्रहणाय द्योतमानानि दशेन्द्रियाणि समिताः = सुसंगतानि युगपदेव परस्परं समवेतानि, अयज्यवः अयजनशीलानि परमात्मभक्तिविमुखकर्तॄणि सुदासम् = सुष्ठु दासः सुदासः यथार्थपरमात्मभक्तः तं ज्ञानिनं परमात्मनः अनन्यभक्तं तं युयुधुः न सम्प्रजह्रुः तं प्रहर्तुं न शेकुः। अत एव अद्मसदाम् = अद्मनि अन्ने हविषि सीदन्तीति अद्मसत् ते अद्मसदः ऋत्विजः तेषाम् अद्मसदां हविर्युक्तानामादिदातॄणां नृणां यज्ञस्य नेतॄणां ऋत्विजां विवेकिनामिति भावः। उपस्तुतिः स्तुतिकरणं परमात्मभक्तिः सत्या सफलाऽभूत् देवाः ~~देव दीप्यमाने द्योतते द्योतमानं वा तथाभूता ब्रह्मज्ञानिनः~~ अपि च एषाम् इन्द्रियनिग्रहवतां देवहूतिषु देवा ~~विद्वांसः~~ आहूयन्ते येषु इति देवहूतयः तेषु देवहूतिषु श्रेष्ठयज्ञेषु अभवन् प्रादुर्भवन्ति ॥८॥ तथा "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनु संज्वरेत्" इन्द्रियनिग्रहद्वारा परं दृष्ट्वा तदनुग्रहात्
बृ० उप० अध्या० ४ ब्रा० ४ श्रु० १२

+ ब्रह्मविदाम्

यतत इति = हे कौन्तेय! हे कुन्तीसुतार्जुन! हि यस्मात् कारणात् यततः समाधिना ब्रह्मप्राप्तिसिद्धये प्रयत्नं कुर्वतः विपश्चितः विशेषेण पातीति-विपः-वाक्, विपो वाचः विनोतीति विपश्चित् " ह्रस्वस्य पिति कृति तुक् " इति तुक् प्रत्ययः। तस्य विपश्चितः माधिकम् असत् जानतः पुरुषस्य मनः = मनुते अनेनेति मनः चित्तं प्रमाथीनि = प्रमथितं विषयदर्शनमात्रेण व्याकुलीकर्तुं शीलं येषां तानि प्रमाथीनि इन्द्रियाणि रागादिदोषग्रस्तानि प्रसभं बलात्कारेण अस्य पश्यतः सतः विवेकयुक्तमपि मनः हरन्ति गृहीत्वा विषयेषु पातयन्ति ॥ ६०॥

(मू॰ गी॰) यततो ह्यपि कौन्तेय! पुरुषस्य विपश्चितः।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६०॥
(वेद गी॰) प्राणापानौ चक्षुः श्रोत्रमक्षितिश्च क्षितिश्च या।
व्यानोदानौ वाङ्मनस्ते वा आकूतिमावहन् ॥ ४॥
अथ॰ कां॰ ११ अनु॰ ८ सू॰ ६ मं॰ ४

प्राणापानाविति = प्राणः हृदयस्थनासाग्रवर्ती मुख्यवायुः। अपानः = अधोवायुः " अधो नयत्यपानस्तु आहारं च नृणां पुनः ", चक्षुः दर्शनसाधनमिन्द्रियम्। श्रोत्रं शब्दग्रहणसाधनमिन्द्रियम्। अक्षितिश्च = अक्षीयमाणा ज्ञानशक्तिः। ज्ञानशक्तिर्हि आत्मस्वरूपत्वेन नित्यत्वात् न कदाचित् क्षीयते। क्षितिश्च = क्षीयमाणा निवासहेतुभूता वा क्रियाशक्तिः। क्रियाशक्तिस्तु अपवर्गसमये लिङ्गशरीरेण सह निवर्तते इति। एवं या द्विविधा शक्तिरस्ति। व्यानोदानौ = व्यानः अन्नरसं सर्वासु नाडीषु विविधम् अनिति प्रेरयतीति व्यानः। उत् ऊर्ध्वम् अनिति उद्गारादिव्यापारं करोतीति उदानः। वाक् वदनसाधनम् इन्द्रियम्। मनः सर्वेन्द्रियानुग्राहकं सुखादिज्ञानसाधनम् अन्तःकरणम्। ते एते प्राणापानादयः दश देवाः आकूतिम् पुरुषकृतं संकल्पम् आवहन् (वै) निश्चयेन आभिमुख्येन प्रापयन्ति। अर्थात् एते दशैव पुरुषस्य सांसारिकमनोरथं निष्पादयन्ति न तु पारलौकिकम् ॥ ४॥

तानीति = तानि रागद्वेषरहितानि सर्वाणि चक्षुरादीनीन्द्रियाणि संयम्य = तेषु प्रवृत्तिं निरुध्य " तत्तद्गोलकेषु स्थापयित्वा, इत्यर्थः" युक्तः योगेन समाहितचित्तः, मत्परः मम भक्तितत्परः, " यद्वा मम भजनरतः आसीत एवं विहरतः यस्य यतेः इन्द्रियाणि विषयग्रहणावकाशतया नीरागाणि भूत्वा वशे वश्यानि भवन्ति। खलु तस्य पुरुषस्य प्रज्ञा बुद्धिः प्रतिष्ठिता निश्चला भवति ॥ ६१

(मू. गी.) तानि सर्वाणि संयम्य युक्त आसीत मत्परः।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१॥
(वेदगी.) दश साकमजायन्त देवा देवेभ्यः पुरा।
यो वै तान् विद्यात् प्रत्यक्षं स वा अद्य महद् वदेत् ॥ २॥
अथ कां. ११ अनु. ४ सू. ८ मं. ३ यद्वा " दाशराज्ञे परियत्ताय

दशेति = पुरा शरीरोत्पत्तिकाले देवाः दशसंख्याकानि चक्षुरादीनि इन्द्रियाणि। देवाः = दीव्यन्ति स्वस्वविषयं प्रकाशयन्ति इति देवाः ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च। देवेभ्यः = स्वस्वसूक्ष्मतन्मात्राभ्यः। [redacted] देवेभ्यः = देवैः विभक्तिव्यत्ययः [redacted] स्वस्वसूक्ष्मतन्मात्राभिः [redacted] साकं सह अजायन्त प्रादुरभवन्। यो वै खलु यतेन्द्रियः सन् तान् देवान् इन्द्रियाणि प्रत्यक्षं प्रत्यक्षपदार्थज्ञापकान् संसारस्थपदार्थावबोधकान् जानीयात्, न तु मुक्तिमार्गदर्शकान् जानीयात्। [redacted] स वा = स च अद्य एतस्मिन् जन्मन्येव महत् देशकालकृतपरिच्छेदरहितं सर्वगतं ब्रह्म वदेत् वदति कथयति नान्यत् अर्थात् तस्य प्रज्ञा ब्रह्मणि प्रतिष्ठिता भवतीति भावः। २॥ यद्वा हे इन्द्रावरुणौ! हे ब्रह्मज्ञानिनौ जीवात्मानौ। दाशराज्ञे = दशशब्दस्य छान्दसो दीर्घः विभक्तिव्यत्ययश्च। दशभिः कर्मज्ञानेन्द्रियैः राजभिः प्रकाशमानैः शत्रुभूतैः विश्वतः = सर्वतः परियत्ताय = परिवेष्टिताय सुदासे सुसुदासाय

विभ्वतः सुदासं इन्द्रावरुणावशिक्षतम् ।
श्वित्यंचो यत्र ~~मनसा~~ नमसा कपर्दिनो धिया धीवन्तो असपन्त तृत्सवः ॥ ८ ॥
ऋ. अष्ट. ५ अध्या. ६ व. ५ मं. ८ । ऋ. मं. ७ सू. ८३ मं. ८

सुभक्ताय अशिक्षितम् शिक्षाम् अयच्छतम् । तदायत्तीकरणबलं प्रायच्छतमितिभावः । यत्र ~~यस्मिन् देशे~~ पथ्योपदेशस्य प्रभावे श्वित्यंचः श्वितं श्वैतं नैर्मल्यम् अञ्चन्तो गच्छन्तः । कपर्दिनः जटाधारिणः तपस्विन इत्यर्थः । धीवन्तः बुद्धिमन्तः कर्मभिर्युक्ताः । तृत्सवः संसारात् तरणेच्छवः मुमुक्षवः । नमसा हविर्लक्षणेन अन्नेन भगवत्प्रणामेन वा धिया भगवत्स्तुतिबुद्ध्या च असपन्त पर्यचरन् ॥ ८ ॥ यथा चोपनिषद "यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः । यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते" कठ. उप. अध्या. १ वल्ली. ३ श्लो. ६, ८ ॥

ध्यायत इति = विषयान् शब्दादीन् ध्यायतः इदं शोभनम् इदम् अशोभनम् इति चिन्तयतः पुंसः पुरुषस्य, तेषु शोभनत्वभोग्यत्वाकारेण भावितेषु भोगेषु संगः प्रीतिः, उपजायते सद्यः उत्पद्यते। संगात् प्रीत्याः कामः भोगेच्छा संजायते सम्यक् उत्पद्यते। कामात् भोगेच्छायाः हतात् क्रोधः अभिजायते आविर्भवति ६२ क्रोधात् संमोहः वैचित्यं कार्याकार्यविवेकशून्यता जायते। संमोहात् कार्याकार्यविवेकशून्यत्वात् स्मृतिविभ्रमः स्मृत्यनुदयः जायते। स्मृतिभ्रंशात् बुद्धिनाशः विवेचनात्मकबुद्धिविनाशः भवति। बुद्धिनाशात् विवेकबुद्धिविनाशात् विद्वान् स्वयमपि प्रणश्यति प्रकर्षेण नश्यति ॥ ६३ ॥

(मू० गी०) ध्यायतो विषयान् पुंसः संगस्तेषूपजायते। संगात् संजायते कामः कामात्
क्रोधोऽभिजायते ॥ ६२ ॥ क्रोधाद्भवति संमोहः संमोहात् स्मृतिविभ्रमः।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ ६३ ॥

(वेद गी०) त्वया मन्यो सरथमारुजन्तो हर्षमाणा हृषितासो मरुत्वन्।
तिग्मेषव आयुधा संशिशाना उपप्रयन्तु नरो अग्निरूपाः ॥
अथ० कां० ४ अनु० ८ सू० ३१ मं० १ ॥ यद्वा "ऋ० अष्ट० ८ अध्या० ३ व० १९ मं० १ ॥ ✳

त्वयेति = हे मन्यो! हे क्रोध! मन्युर्मन्यतेः कान्तिकर्मणः इति निरु० १०।२९ हे मरुत्वन्! हे मरुद्वेगयुक्त! कौत्मिक! जीवात्मन्! त्वया कुपितेन सरथं रथेन देहेन सहिते सरथं देहविशिष्टम् आत्मानम् आरुजन्तः पीडयन्तः। यास्कस्त्वाह "सरथं समानं रथमारुह्य रुजन्त इति नि० १०।३० रुजो भङ्गे तुदादित्वात् शः। हर्षमाणाः तव आश्रयात् क्रोधेन मे कार्यं भविष्यतीति अविकला हृष्यन्तः। हृषितासः हृषितासः कार्यो भवनात् सञ्जातरोषाः। तिग्मेषवः तीक्ष्ण बद्धवाः वचनबाणा येषाम्। आयुधा आयुधानि परहननाय संशिशानाः सम्यक् निश्यन्तः तीक्ष्णी कुर्वन्तः नरः नेतारः विवेकप्रगतगण्या अपि अग्निरूपाः अग्निवत् तीक्ष्णदाहादिकर्माणः यद्वा अग्निवद् दुष्प्रधर्ष्याः उपप्रयन्तु उपगच्छन्तीति भावः। १ प्रचेत इति = हे प्रचेतः हे प्रकर्षेण ज्ञातः विद्वन्! तविषस्य महतः तव क्रत्वा कर्मणा अभागः विवेकज्ञानभाग्यैः रहितः सन् अपपरेतोऽस्मि मोहादिनाऽपक्रम्य परागतोऽस्मि पुरुषत्वयः "अपपरेतो ऽस्मि = कामक्रोधदुःसंगाऽभिभूतोऽस्मीत्यर्थः। हे मन्यो! हे क्रोध! अक्रतुः विवेकजन्यप्र

✳ यद्वा "अभागः सन्नपपरेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः। तं त्वा मन्यो अक्रतुर्जिहीळाहं स्वा तनूर्बलदाव्‌ न एहि। अथ० कां० ४ अनु० ८ सू० ३२ मं० ५ ऋ० अष्ट० ८ अध्या० ३ व० २० मं० ५ यद्वा "यं देवा स्मरमसिञ्चन्नप्स्वन्तः शोशुचानं सहाध्या। तं ते तपामि वरुणस्य धर्मणा, ... कामं

स्य ... जिहीळ ... क्रोधमोहस्मृतिभ्रंशबुद्धिनाशज्ञानकलितप्रयाणैः सह अग्नि अनुः अतस्थाने ... ५६ विवेकरहितो ... अभिभूत। वरुणस्य वरीतुं ... शान्तिमयजलस्य धर्मणा धारकेण धर्मेण ते तव कामस्य तं दुःखात्मकं कामं तपामि

रागद्वेषेति = रागः स्नेहः द्वेषः अप्रीतिः, ताभ्यां वियुक्तैः रहितैः अत एवात्मवश्यैः आत्मनः स्वस्य वश्यैः वशवर्तिभिः प्रसन्नैः इन्द्रियैः विषयान् अनिषिद्धान् अन्नरसादीन् प्राणत्राणमात्रपर्याप्तान् चरन् भुञ्जानः विधेयात्मा विधेयः इन्द्रियशुद्ध्या समाधिना च निर्मुक्तरागादिदोषतया स्वाधीनः आत्मा मनो यस्य, स विधेयात्मा सन् प्रसादं चित्तस्य स्वास्थ्यम् अत्यन्तनिर्मलतां गच्छति।६४।

(मू॰ श्लो॰) रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥६४

(वेदगी॰) इन्द्रे भुजं शशमानास आशत सूरो दृशीके वृषणश्च पौंस्ये।
प्र ये न्वस्यार्हणा ततक्षिरे युजं वज्रं नृषदनेषु कारवः ॥८॥ ऋ॰ अष्ट॰ ८ अध्या॰ ४ व॰ २४ मं॰ ८ मं॰ १ सू॰ १२४ मं॰

...भकर्मवर्जितः यद्वा कार्याकार्यविवेकशून्यः सन् अहं तं तथाविधं त्वां क्रोधं जिहीडु = क्रोधितवान्। विवेकशून्ये मूढतमे पुरुषे तवाक्रमणं प्रति बलवत्तरं भवतीति भावः। हेडृ इति क्रुध्यतिकर्मा। स्वा तनू स्वस्यां तन्वां बलदावा बलस्य दाता सन् नः अस्माकं इह समीपे आगच्छ। हे क्रोध! मत्तस्त्वं दूरीभव येन मे विवेचनात्मिकबुद्धिविनाशः मा अस्तु। बलदावा = डुदाञ् दाने "आतो मनिन् क्वनिब् वनिपश्च,, इति वनिप्।८॥

इन्द्रे इति = ये शशमानासः शंसमानः स्तोतारः इन्द्रे आत्मनि मनसि वा भुजं पालनं रक्षणं वा आशत अवाप्नुवन्ति, अर्थात् आत्मानम् इन्द्रियविषयेभ्यः रक्षन्ति। सूरः सर्वेन्द्रियग्रामस्य स्वेच्छया प्रेरकः विद्वान्। दृशीके केवलशरीरयात्रामात्राय सर्ववस्तुदर्शनम् आशत प्राप्नोति। वृषणः ज्ञानाऽमृतवर्षकः विधेयात्मा विद्वान् पौंस्ये = पौंस्यम् "अत्र विभक्तिव्यत्ययः आत्मबलम् आशत प्राप्नोति। कारवः स्तोतारः विवेकिनः जनाः अस्य आत्मनः अर्हणा पूजनानि नु क्षिप्रं ततक्षिरे प्रकृष्टं कुर्वन्ति। ते स्तोतारः आत्मविवेकिनः पुरुषाः नृषदनेषु नरः सीदन्ति तिष्ठन्ति येषु तथाभूतेषु स्थानेषु अर्थात् ब्रह्मयज्ञेषु युजं सहायभूतं वज्रं वज्रवत् कठोरमपि मनः आशत = प्राप्नुवन्ति। मनोऽपि स्वायत्तीकुर्वन्तीत्यर्थः।८॥ "ओं पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम्। अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते,, कठोप॰ अध्या॰ २ वल्ली १ श्रु॰ २

प्रसादे इति = इन्द्रियशुद्ध्याः प्रसादे चित्तस्वास्थ्ये सति अस्य विवेकिनः सर्वदुःखानाम् आध्यात्मिकाधिभौतिकाऽऽधिदैविकत्रिविधदुःखानां हानिः निवृत्तिः उपजायते उत्पद्यते। तत एव आशु शीघ्रं प्रसन्नचेतसः निर्मलमनसः तस्य बुद्धिः विवेकनात्मिका बुद्धिः पर्यवतिष्ठते प्रतिष्ठिता भवति ॥ ६५ ॥

(मू· गी·) प्रसादे सर्वदुःखानां हानिरस्योपजायते।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥
(वेदगी·) आयुषायुःकृतां जीवायुष्मान् जीव मा मृथाः।
प्राणेनात्मन्वतां जीव मा मृत्योरुदगा वशम् ॥
अथ· कां· १९ अनु· ४ सू· २७ मं· ८

आयुषा इति = हे जीवात्मन्! त्वम् आयुष्कृतां "तपसा मनःस्थैर्यादिना दीर्घम् आयुः कुर्वन्ति सम्पादयन्तीति आयुष्कृतः चिरकालजीविनः, तपस्विनः। तेषाम् आयुष्कृतां तपस्विनाम् आयुषा" तेषां यादृग् आयुः तादृशेनायुषा इत्यर्थः जीव सर्वदुःखविनाशपरः सन् प्रसन्नचेताः जीवितो भव। अतः आयुष्मान् दीर्घायुष्यो भव। जीव = प्रतिष्ठितबुद्धिः भूत्वा जीवितो भव। मा मृथाः = इन्द्रियाऽनुचरो भूत्वा मृतिं मा प्राप्नुहि। आत्मन्वताम् स्थिरेण आत्मना संसारे ये वर्तन्ते ते आत्मन्वानः तेषाम् आत्मन्वतां स्थिरात्मनां प्राणेन त्वं जीव। यथा स्थिरात्मानः इन्द्रियार्थोऽलोलुपाः जीवन्ति, तथा त्वमपि जीव = जीवितो भव। मृत्योः रागद्वेषबद्धेन्द्रियविषयोपभोक्तृवन्मारकस्य देवस्य अन्तःकरणेन्द्रियस्य वशम् अधीनं मा उदगाः मा उद्गच्छ मा प्राप्नुहीति यावत् ——— मृथाः = मृङ् प्राणत्यागे। माङि लुङ् "ह्रस्वादङ्गात्" इति सिचो लोपः ॥ ८ ॥

नास्तीति = अयुक्तस्य असमाहितचेतसः पुरुषस्य बुद्धिः विवेकबुद्धिः नास्ति । तथाऽयुक्तस्य समाधिसमुत्पन्न ब्रह्मापरोक्षज्ञानशून्यस्य भावना निदिध्यासनरूपा चित्तवृत्तिः नास्ति । अभावयतः निदिध्यासनरूपचित्तवृत्तिरहितस्य शान्तिः नास्ति । अशान्तस्य शान्तिरहितस्य सुखं नित्यं निरंतरं ब्रह्म सुखं कस्मात् कारणात् भविष्यति ॥ ६६ ॥

(मू. गी.) नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६

(वेद.) यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णं बृहस्पतिर्मे तद्दधातु ।
शं नो भवतु भुवनस्य यस्पतिः । यजुः अध्या. ३६ । २ मन्त्र
"यन्मे छिद्रं मनसो यच्च वाचः सरस्वती मन्युमन्तं जगाम ।
विश्वैस्तद् देवैः सह संविदानः संदधातु बृहस्पतिः । अथ. कां.
१९ अनु. १ सू. ४० मं. १

"यद्यभ्र्यं मे इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव (सहोवाच मैत्रेयी)

यन्मे इति = मे असमाहितस्य मम चक्षुषः चक्षुरेन्द्रियस्य छिद्रम् असमतादर्शनदोषः अस्ति । [struck] हृदयस्य बुद्ध्याः हृदयशब्देन बुद्धिः मा ह्यां ; यत् छिद्रं ब्रह्मत्वविवेचात्मकशक्तिविरहितत्वदोषः अस्ति । अर्थात् = असमाहितचेतोजन्यविवेकबुद्धिदोषोऽस्ति । वा* अतितृण्णम् अतिहिंसितत्वदोषः । अतिव्याकुलत्वम् अस्थैर्यत्वम् इति भावः । बृहस्पतिः = बृहतो मंत्रसमूहस्य वेदस्य पतिः पालयिता ईश्वरः, यद्वा बृहतः वृद्धतमस्य आकाशादेः पालयिता परमेश्वरः, मे मह्यं मयि वा तत् ~~[struck]~~ छिद्रं दधातु पुष्णातु पूरयतु अर्थात् सच्छिद्रः मयि मा भवतु । यः परमेश्वरः भुवनस्य समग्रसंसारस्य पतिः रक्षकः अस्ति । स एव नः अस्मभ्यं मुमुक्षुजीवेभ्यः शम् शान्तिं कल्याणं वा भवतु भवते लकारव्यत्ययः "भू ऊ प्राप्तौ इत्यस्य धातोः रूपम् प्रापयति । अन्यथा अशान्तानामस्माकं मुक्तिसुखं कदाऽपि न भविष्यति ।

*. मनसः शब्दस्य भिन्नसंधितत्वात् | यन्मे इति = मे असमाहितचित्तस्य मम मनसः चित्तस्य यत् छिद्रं दोषः अस्ति यत् वाचः वाण्याः छिद्रं दोषः अस्ति मे मम सरस्वती वाणी मन्युमन्तं कुपितं प्रक्षे जगाम तद् ते दोषं विश्वैः देवैः सह समग्रैः विद्वद्भिः सह संविदानः विचारयन् बृहस्पतिः वेदवाक्पालयिता विद्वान संदधातु तच्छिद्रं तां त्रुटिं वा पोषयतु ॥ यथा [struck] "यान्येतानि दुरन्तानि दुर्जराण्यभूतानि च । तृष्णा बद्धानि कृत्स्नानीह तानि दुःखानि राघव । इ इच्छाद्यो यथा दुःखमिच्छाशान्तेर्यथा सुखम् । तथा न नरकेनापि ब्रह्मलोकेऽनुभूयते । २ यावतीः यावतीर्जन्तोरिच्छोदेति यथा यथा, ततो दुःखबीजाग्निः प्रतेहति, इतियोगवासिष्ठे

ते जीविते स्याममृतत्वस्य तु नाशास्ति वित्तेन" बृहदा. उप. अध्या. २ ब्रा. ४ श्लो. २

प्रसादे इति = इन्द्रियशुद्ध्या: प्रसादे चित्तस्वास्थ्ये सति अस्य विवेकिनः सर्वदुःखानाम् आध्यात्मिकाधिभौतिकाऽऽधिदैविकत्रिविधदुःखानां हानिः निवृत्तिः उपजायते उत्पद्यते। तत एव आशु शीघ्रं प्रसन्नचेतसः निर्मलमनसः तस्य बुद्धिः विवेचनात्मिका बुद्धिः पर्यवतिष्ठते प्रतिष्ठिता भवति ॥ ६५॥

दुःखा
(मू· गी·) प्रसादे सर्वचिन्तानां हानिरस्योपजायते।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥६५॥

(वेदगी·) आयुषायुःकृतां जीवायुष्मान् जीव मा मृथाः।
प्राणेनात्मन्वतां जीव मा मृत्योरुदगा वशम् ॥
अथ· कां· १९ अनु· ४ सू· २७ मं· ८

आयुषा इति = हे जीवात्मन्! त्वम् आयुष्कृतां "तपसा मनःस्थैर्यादिना दीर्घम् आयुः कुर्वन्ति सम्पादयन्तीति आयुष्कृतः चिरकालजीविनः, तपस्विनः। तेषाम् आयुष्कृतां तपस्विनाम् आयुषा" तेषां यादृग् आयुः तादृशेनायुषा इत्यर्थः जीव सर्वदुःखविनाशपरः सन् प्रसन्नचेताः जीवितो भव। अतः आयुष्मान् दीर्घायुष्यो भव। जीव = प्रतिष्ठितबुद्धिः भूत्वा जीवितो भव। मा मृथाः = इन्द्रियाऽनुचरो भूत्वा मृतिं मा प्राप्नुहि। आत्मन्वताम् स्थिरेण आत्मना संसारे ये वर्तन्ते ते आत्मन्वानः तेषाम् आत्मन्वतां स्थिरात्मनां प्राणेन त्वं जीव। यथा स्थिरात्मानः इन्द्रियार्थोऽलोलुपाः जीवन्ति, तथा त्वमपि जीव = जीवितो भव। मृत्योः रागद्वेषबद्धेन्द्रियविषयोपभोक्तृवन्मारकस्य देवस्य अन्तःकरणेन्द्रियस्य वशम् अधीनं मा उदगाः मा उद्गच्छ मा प्राप्नुहीति यावत् मृथाः = मृङ् प्राणत्यागे। माङि लुङ् "ह्रस्वात् अंगात्" इति सिचो लोपः ॥८॥

इन्द्रियाणामिति = हि = यस्मात् कारणात् इन्द्रियाणां वागादिश्रोत्रेन्द्रियाणां स्वस्वविषयेषु चरतां सतां यत् लोकेषणस्वविषयकर्मवासनाभिः आविष्टं मनः अनुविधीयते स्वेच्छानुरूपं प्रवर्त्यते। तत् एव स्वच्छन्दचारि मनः, अम्भसि नदीजले वायुः नावमिव अस्य स्ववासनाऽनुरूपप्रवर्तमानस्य विदुषः प्रज्ञाम् आत्माऽनात्मविवेकबुद्धिं हरति संहरति ॥ ६७ ॥

(मू· गी·) इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥

(वेदगी·) मनसा संकल्पयति तद् देवान् अपि गच्छति। ३१ यद्वा
ततो ह ब्रह्माणो वशामुपप्रयन्ति याचितुम् । अथ· कां· १२ अ· ४ सू· ४ मं·
मनसे चेतसे धिय आकूतय उत चित्तये। मत्यै श्रुताय चक्षसे
विधेम हविषा वयम् ॥ अथ· कां· ६ अनु· ४ सू· ४१ मं· १

मनसेति = पुरुषः इन्द्रियविषयाधीनः सन् यदा मनसा स्वच्छन्दचारिणा मनसा संकल्पयति संकल्पं कुरुते। तद्ध्याने देवान् स्वस्वविषयैः प्रकाशमानानि चक्षुरादीन्द्रियाणि अपि गच्छति अपि प्राप्नोति। ततः मनसः एवंविधव्यवहाराऽनन्तरं ब्रह्माणः ब्राह्मणाः ब्रह्मज्ञानोपपन्नाः पुरुषाः तदेव मनः वशां वशं याचितुं याञ्चां कर्तुं वशीकर्तुमित्यर्थः उपप्रयन्ति प्राप्नुवन्ति ॥ ३१ ॥ मनसे इति = चेतसे सम्यग्ज्ञानसाधनाय मनसे, धिये ध्यानसाधनाय, आकूतये = सदसद्विवेकसंकल्पाय। उत अपि च चित्तये यत्संबन्धात् पुरुषश्चेतन उच्यते सा चित्तिः अतीतादिविषयस्मृतिहेतुः। मत्यै = आगामिविषयज्ञानजनन्यै। श्रुताय = श्रवणजनितज्ञानाय। चक्षसे = दर्शनाय चाक्षुषज्ञानाय एवंविधव्यापारहेतुभूताय मनसे हविषा हूयमानेन दीयमानेन वचनेन वा आत्माऽनात्मविवेकनिमित्ते हूयमानेन वचनेन इत्यर्थः। वयम् मनोनिरोधका विधेम परिचरेम ॥ १ ॥

तस्मादिति = हे महाबाहो ! हे अर्जुन ! तस्मात् हेतोः यस्य पुरुषस्य इन्द्रियार्थेभ्यः शब्दादिभ्यः इन्द्रियाणि श्रोत्रादीनि सर्वशः निखिलप्रकारेण निगृहीतानि वशीभूतानि भवन्ति । तस्य पुरुषस्य प्रज्ञा बुद्धिः प्रतिष्ठिता भवति समाधिः भवति । ६८

(मू० गी०) तस्माद् यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यः तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८

(वेदगी०) यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति ।
यो जागार तमयं सोम आह तवाऽहमस्मि सख्ये न्योकाः ॥ १

साम० उत्तरा० ९ प्र० ३ अ० २ ख० ५ मं० १ ऋ० अ० ४ अध्या० २ व० २५ मं० १४ तदुत्तरं द्वितीये मंत्रे
ऋ० मं० ५ सू० ४४ मं० ५
"अग्निर्जागार तमृचः कामयन्तेऽग्निर्जागार तमु सामानि यन्ति । अग्निर्जागार तमयं सोम आह तवाऽहमस्मि सख्ये न्योकाः ॥" साम० १।२।५

य इति = यः पुरुषः स्थिरबुद्धिरिति यावत् जागार इन्द्रियार्थेभ्यः जागरूकः विनिद्र इत्यर्थः । स्वशरीरे वर्तते । तं पुरुषं ऋचः सर्वशास्त्रात्मिकाः सदसद्विवेकवत्यः बुद्धयः कामयन्ते अभिलषन्ति अर्थात् ~~सर्वशक्तिः~~ विवेचनात्मिका बुद्धिः तं प्राप्नोति । ~~सर्व~~ यः पुरुषः जागार इन्द्रियनिग्रहणाय जागरणशीलः भवति । तमु = तमेव पुरुषं सामानि सान्त्वनानि इन्द्रियार्थप्रवृत्तिशान्तयः यन्ति प्राप्नुवन्ति । यो ज्ञानी जनः जागार सर्वथा विषयाणाम् अग्रहणाय जागर्ति, तं पुरुषम् अयं सोमः ~~सान्तः~~ मनः आत्मा आह वक्ति, मां स्वीकुरु मां जानाहीत्यर्थः । तव तादृशस्य सर्वथा जागरूकस्य प्रतिष्ठितबुद्धेर्वा सख्ये समानख्याने हितकरणे न्योकः नियतस्थानः अहम् अस्मि अहं भवामि । १ ॥

या निशेति = सर्वभूतानाम् = पूर्वजन्मकर्मफलाऽनुभूत्यै पुनः पुनर्भवन्ति जायन्ते इति भूतानि प्राणिनः तेषां सर्वेषां भूतानां या निशा रात्रिकालः लौकिकव्यवहारतो निवृत्तिकालः अस्ति। शं सुखं नितरां सुखरूपत्वात् निशा, तस्यां निशायाम् अत्यन्तसुखरूपायां परस्यां देवतायां संयमी = बहिः प्रवृत्तिनिवृत्तसर्वेन्द्रियः ब्रह्मवित् एक एव जागर्ति तत्रैव रमते इत्यर्थः। यस्याम् अविद्यायां लौकिकव्यवहारप्रवृत्तौ भूतानि जीवाः "अहं मम, इदमिष्टमिदमनिष्टमित्यादि व्यवहरन्ति। सा अविद्या लौकिकव्यवहारप्रवृत्तिः पश्यतः "द्रष्टारं दर्शनं दृश्यं च सर्वं प्रत्यग्दृश्यां ब्रह्मैवाऽवलोकयतो मुनेः ब्रह्मनिष्ठस्य निशा शयनकालः भवति। यथा निशायां प्राणिनो न व्यवहरन्ति, तथाऽयमविद्यानिशायाम् अहं ममेति न व्यवहरन्ति ॥ ६९

(मू. गी.) या निशा सर्वभूतानां तस्यां जागर्ति संयमी।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥६९॥
(वेद गी.) ऊर्ध्वः सुप्तेषु जागार ननु तिर्यङ् निपद्यते।
न सुप्तमस्य सुप्तेष्वनु शुश्राव कश्चन ॥
अथ. कां. ११ सू. ४ मं. २५

ऊर्ध्व इति = ऊर्ध्वः अविद्यातः उत्थितः संयमी ब्रह्मवित् सुप्तेषु लौकिकव्यवहारतः निवृत्तेषु जीवेषु सत्सु जागार = जागर्ति ब्रह्मध्यानलग्नः सन् जागरणं करोति निद्रारहितो वर्तते इति भावः। ननु इति प्रश्ने। सुप्तः प्राणी ब्रह्मविमुखः लौकिकव्यवहारतो विमुखः सन् तिर्यङ् तिर्यगवस्थितः मूढाऽवस्थामापन्नः निपद्यते निद्रापरवशः शेते मायावशो वा शेते। सुप्तेषु प्राणिषु सुप्तेषु निद्रापरवशेषु सत्सु मायापरवशेषु सत्सु वा अस्य संयमिनः ब्रह्मनिष्ठस्य पुरुषस्य सुप्तं स्वापं मोहं कश्चन कोऽपि संयमी पुरुषः ब्रह्मवित् यतिः न अनुशुश्राव अनु पारंपर्यक्रमेण श्रुतवान् ॥२५॥ यथा चोपनिषद् "तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति" प्रश्नोप. प्र. १ श्रु. १६

आपूर्यमाणमिति = आपः गंगासिन्ध्वादि मुखेभ्यः समागतानि जलानि, आपूर्यमाणं गंगामहानद्यादिजलैः मेघजलैश्च समन्तात् आपूर्यमाणं स्वयमचलप्रतिष्ठम् = अचला चलनवर्जिता वृद्धिक्षयशून्या प्रतिष्ठा जलस्थितिः मर्यादा यस्य, सोऽचलप्रतिष्ठस्तं जलप्रवेशाऽप्रवेशकालेऽप्येकरूपेण वर्तमानमित्यर्थः। समुद्रं समुनत्ति स्वकीयेन जलेन कृत्स्नं जगत् क्लेदयतीति समुद्रः तं समुद्रं यद्वत् शुक्लादिवर्णं मधुरादिरसलघुत्वादिगुणविशेषं परित्यज्य समुद्रभावमेव यथागच्छन्ति। तद्वत् तेनैव प्रकारेण सर्वे कामाः = काम्यन्ते नामभेदेन रसभेदेन पाकभेदेन विविच्य गृह्यन्ते इति कामाः भोग्यपदार्थाः भोग्यविशेषाः तैः सर्वतः आपूर्णम् अचलप्रतिष्ठं सदाकारतामापाद्य सदात्मनैव निश्चलीभूय प्रतिष्ठा स्थितिर्यस्य सोऽचलप्रतिष्ठः, ईदृशं यं ब्रह्मविदं यतिं सर्वे कामाः प्रविशन्ति स्वयं ब्रह्मभावमधिगच्छन्तीति भावः। स एव ब्रह्मविद् यतिः शान्तिम् अविद्याप्रपञ्चोपशमं लक्षणमाप्नोति न तु कामकामी = कामान् विषयान् यः कामयते सः कामकामी। ७०॥

(मू. गी.) आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्।
तद्वत् कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न तु कामकामी ७०.

(वेदगी.) परा हि मे विमन्यवः पतन्ति वस्य इष्टये।
वयो न वसतीरुप। ऋ. अ. १ अध्या. २ व. १६ मं. ४ ॥ यद्वा मं. १ सू. २५ मं. ४

"आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः।"

परेति = हे परमात्मन्! मे त्वदुत्कस्य मम विमन्यवः "मन्यु इति क्रोधनाम। विगतः मन्युः इति विमन्यवः क्रोधरहिताः शान्ताः बुद्धयः कामाः वा। वस्यः इष्टये वसीयसः अतिशयेन वसुमतो जीवनस्य प्राप्तये "यथा श्रेष्ठजीवनं शान्तकामत्वात् शान्तिमयं ब्रह्मप्राप्तिकरं भूयादेतत्संसिद्धये। परापतन्ति = परा उन्मुखाः पुनरावृत्तिरहिताः प्रसरन्ति। भूयः मे कामाः मयि मा प्राप्नुवन्तु इतिभावः हीति निश्चये। वयः न पक्षिण इव वसतीः निवासस्थानानि उपपतन्ति प्राप्नुवन्ति। यथा पक्षिणः स्वमनःशान्तये स्वस्वाभाविकसुखप्राप्तये च स्वनिवासस्थानानि प्राप्नुवन्ति तथा विमन्यवः पुरुषाः अपि शान्तिं लभन्ते इति भावार्थः। वस्य इष्टये "वसुमच्छब्दाद् मतोर्लुक्, इति मतुपो लुकि टिलोप ईयसुनो यकारलोपश्छान्दसः। यद्वा हे इन्द्र! हे जीवात्मन्! इन्दवः = इन्दुः आत्मा "इन्दुरादित्यः-

न॒ त्वामि॑न्द्राति॑रिच्यते। साम॰ प्रपा॰ ३ अर्द्ध १म॰ १मदश॰ मं॰ ४
ऋ॰ अष्ट॰ ६ अध्या॰ ६ व॰ १९ मं॰ २२

इन्दुः आत्मा,, निरुक्तपरिशिष्टाऽध्या॰ २ इन्दवः आत्मसम्बन्धिस्त्रवन्तः कामाः त्वा त्वां मुमुक्षुं जीवात्मानं आविशन्तु स्वनामरूपे विहाय लयं गच्छन्तु। समुद्रमिव सिन्धवः। समुद्रवन्ति एनम् आपः इति समुद्रः तं समुद्रं सिन्धवः स्यन्दनशीलाः नद्यः आविशन्तु आविशन्ति। सर्वतः प्रविशन्ति। यथा नद्यः सर्वतः प्रतिनिवृत्य समुद्रं प्रविशन्ति तथा जीवात्मन्नन्तः सर्वे कामाः यदा आत्मनि प्रविशन्ति। तदा हे इन्द्र! हे जीवात्मन्! त्वाम् कश्चिदपि संसारी पुरुषः नातिरिच्यते ~~आत्मबलेन नातिरिक्तोऽस्ति~~। आत्मबलेन सामर्थ्यवान् त्वत्तोऽधिको कोऽपि नास्ति ॥ ४ ॥ यथा
अधिको श्रान्तो न भवति

चोपनिषदि "कामान् यः कामयते मन्यमानः सकामभिर्जायते तत्र तत्र। पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः,, मुण्डकोप॰ मुण्ड॰ ३ खं॰ २ मं॰ २ अथ च "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्,, मुण्ड॰ ३ मुं॰ ३ खं॰ २ मं॰ ८

विहायेति = यः पुमान् = पुमर्थम् अतिदुर्लभं मोक्षं महता प्रयत्नेन सम्पादयतीति पुमान् पुरुषशब्दवाच्यो यो ब्रह्मवित् यतिः स्वयं निर-
हंकारः "अहंता ममतादिरहितः, अत एव निर्ममः = "मम इदं तव इदम्," इत्यादिव्यवहाररहितः। यद्वा निर्गतः ममतासम्बन्धो यस्य
स निर्ममः। अत एव निस्पृहः = विषयेभ्यो निर्गतः ~~ममतासम्बन्धो यस्य~~ स्पृहा इच्छा यस्य सः निस्पृहः अर्थात् लोकैषणावित्तै-
षणापुत्रैषणारहितः। सर्वान् कामान् सर्वान् विषयान् अभिलाषान् वा विहाय त्यक्त्वा चरति पर्यटति। स एव पुरुषः शान्तिं
आत्यंतिकसंसारोपलक्षणं विदेहमुक्तिम् अधिगच्छति ॥७१॥

(मू. गी.) विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥७१॥

(वेदगी.) अकामो धीरो अमृतः स्वयंभू रसेन तृप्तो न कुतश्चनोनः।
तमेव विद्वान् न बिभाय मृत्योरात्मानं धीरमजरं युवानम् ॥
अथ. कां. १०. अनु. ४ सू. ८ मं. ४४

अकाम इति = यः पुरुषः अकामः = कामः एषणाः विषयाश्च "लोकैषणा वित्तैषणा पुत्रैषणा," विषयाः नानाविधाः मो-
गाः। न सन्ति कामाः विषयाः एषणा वा यस्य स अकामः। अतः स एव धीरः = धियं राति यद्वा धियम्प्रेरयतीति धीरः
बुद्धिसाक्षी, अत एव अमृतः मरणरहितः विमुक्त इत्यर्थः। अतः स्वयंभूः = स्वयम् आत्मना भवतीति स्वयंभूः आत्मरमण इत्य-
र्थः अत एव रसेन ब्रह्मानन्दरसेन तृप्तः तृप्तिं प्राप्तः परिपूर्ण इत्यर्थः अत एव न कुतश्चन ऊनः कस्माच्चिदपि वस्तुनः ऊनः
हीनः नास्ति। एवंविधः अकामः पुरुषः। तम् एव आत्मानं धीरं बुद्धिसाक्षिणम् अजरं जरारहितम् शैथिल्यापादकावस्थाशू-
न्यं युवानं श्रेष्ठम् विद्वान् जानन् मृत्योः मरणात् विनाशादिति यावत्। न बिभाय = न भयं प्राप्नोति ॥ ४४
यथा छान्दोग्योपनिषदि "यो वै भूमा तत्सुखं नाऽल्पे सुखमस्ति," छान्दोग्य० प्रपा. ७ खं. २३ श्रु. १

एषेति = हे पार्थ! स्वस्वरूपं प्रकाश्य मुमुक्षुं संसारमृत्योः पातीति पः परमात्मा, तमेवार्थयते वा गच्छतीति पार्थः तस्य संबुद्धौ हे पार्थ! हे मुमुक्षो! ब्राह्मी ब्रह्मप्रापिका ब्रह्मविषयिणी वा स्थितिः निष्ठा एषा मया प्रतिपादिता। एनां ब्रह्मनिष्ठां प्राप्य अनुष्ठाय न विमुह्यति विमोहाय न कल्पते। [illegible] अन्तकालेऽपि (मृत्यवस्थायामपि) अस्यां ब्रह्मनिष्ठायां स्थित्वा ब्रह्मनिर्वाणं ब्रह्मगतिं यद्वा निर्वाणं निष्क्रियं नित्यानन्दैकरसं ब्रह्म ऋच्छति मुक्तिं गच्छतीत्यर्थः। ७२॥ इति श्रीसारस्वतान्वयलैयानाम कोपाध्यायसूनुना जगन्नाथशास्त्रिणा संकलितायां गीतावेदार्थबोधिन्यां द्वितीयोऽध्यायः।

(भ.गी.) एषा ब्राह्मी स्थितिः पार्थ! नैनां प्राप्य विमुह्यति।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥७२॥
इति श्रीमद्भगवद्गीतायां विषादयोगो नाम द्वितीयोऽध्यायः समाप्तः
(वेदगी.) उदीर्ध्वं जीवो असुर्न आगादप प्रागात्तम आ ज्योतिरेति।
आरैक्पन्थां यातवे सूर्यायागन्म यत्र प्रतिरन्त आयुः।
ऋ. अष्ट. १ अध्या. ८ व. ३ मं. १६

उदीर्ध्वमिति = हे मनुष्याः! उदीर्ध्वं मोहनिद्रां परित्यज्य उत्तिष्ठत, संसारमोहविरहिताः ब्रह्मनिष्ठायै उत्तिष्ठत। नः अस्माकं जीवः जीवात्मा असुः ब्रह्मनिष्ठायां स्थितः "असु क्षेपणे" रूपम्, यद्वा शरीरस्य संसारयात्रायै प्रेरयिता आगात् आगतवान्। तमः अज्ञानं मोहो वा अपप्रागात् निरगच्छत्। मोहनिर्गमने सति भूयः मोहाय न कल्पते इति भावः। ज्योतिः ब्रह्मप्रकाशः ^तदानीं ब्रह्मानन्दज्योतिः आ+एति एति आगच्छति। सूर्याय = सरति गच्छतीति वा सूर्यः, सुवति प्रेरयति तत्तद्व्यापारेषु कृत्स्नं जगत् इति सूर्यः परमेश्वरः। सर्वस्य प्राणिजातस्य प्रेरकः "राजसूयसूर्य——" इत्यादिना क्यपि रूपे निपात्यते। तस्मै सूर्याय = विभक्तिव्यत्ययः। सूर्याय = सूर्यस्य जगत्प्रेरकस्य जगत्स्वामिनश्च पन्थां मार्गं मुक्तिधाम यातवे प्राप्तये आरैक् विविक्तीकरोति। तस्मिन् प्रदेशे अगन्म गच्छाम। यत्र यस्मिन् धाम्नि आयुः जीवनं प्रतिरन्ते प्रवर्द्धयन्ति। अर्थात् मुक्तिधाम्नि स्थित्वा तत्रैव रमन्ते ब्रह्मानन्दं पिबन्तः स्वानन्दजीवनं वर्द्धयन्ति। १६॥ इति श्रीजगन्नाथशास्त्रिसंकलितायां वेदगीताटीकायां द्वितीयोऽध्यायः समाप्तः॥ २॥ *यथा गौडपादीयकारिका प्र. ३ श्लो. १२६ स्वस्थं शान्तं सनिर्वाणमकथ्यं सुखमुत्तमम्। अजमजेन ज्ञेयेन सर्वज्ञं परिचक्षते॥ (द्वितीयाऽध्यायसंक्षिप्तसारांशः) ६६

"शरीरं नश्वरं ज्ञेयमात्मा नित्योऽजरोऽमरः। देहे नष्टे न नाशोऽस्य मोहोऽतोऽस्ति (स्व)निरर्थकः। १ सांख्ययोगसमाधानं सत्वशुद्धिस्तथैव च। ज्ञानं तस्य फलं मोक्षः निष्कामकर्मशिक्षणम्। २ स्थिरप्रज्ञाफलं शान्तिरिमे सर्वे पृथक् पृथक्। द्वितीयेऽस्मिन्नध्याये श्रीकृष्णेन निरूपिताः ३

यस्य निःश्वसितं वेदः यस्य गीतामृ वचोऽमृतम्। तत्कृपातोऽर्जुनः यातः कुरुक्षेत्रे युद्धार्णवम् १
वेदो गीता तथा गीता वेद एव न संशयः। वेदगीतापृथक्त्वं न द्वयोः ब्रह्मप्रकीर्तनात् ॥ २ ॥
अर्जुन उवाच। हे जनार्दन! जनं जननं तत्कारणम् अज्ञानञ्च स्वसाक्षात्कारेण अर्दयति हिनस्तीति जनार्दनः, तस्य संबुद्धौ
हे जनार्दन! कर्मणः कर्मयोगात् बुद्धिः ज्ञानयोगः एव ज्यायसी श्रेष्ठा इति ते मता अभिमता चेत् यदि। तत् तस्मात् कारणात्
किं किमर्थं माम् अर्जुनं जीवं वा घोरे हिंसात्मके कर्मणि नियोजयसि चोदयसि। हे केशव! केशौ ब्रह्मरुद्रौ अनुकम्पयो वाति
इति वा उ इति केशवः, तत्संबुद्धौ हे केशव! हे कृष्ण! १

(मू. गी.) ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥
(वेद गी.) यच्चिद्धि ते पुरुषत्रा यविष्ठाचित्तिभिश्चकृमा कच्चिदागः।
कृधी ष्वस्माँ अदितेरनागान्व्येनांसि शिश्रथो विष्वगग्ने ॥ ४
ऋ. अष्ट. ३ अध्या. ५ व. १२ मं. ४ ऋ. मं ३४. सू. १२ मं. ४ तै. सं. ४, ७, १५, २

यच्चिद्धीति = हे अग्ने! पापदहनशक्तिसम्पन्न परमेश्वर! हे जनार्दन! हे यविष्ठ! हे अतिशयेन युवन्! हे अत्यन्तश्रेष्ठ!
यत् चित् हि = यदेव हि, ते तव पुरुषत्रा परिचारकेषु पुरुषेषु अचित्तिभिः अहंताममतामोहपरिपूर्णैः अज्ञानैः
कच्चित् कदाचित् किञ्चित् आगः अपराधं चकृम कुर्याम। अतः अस्मान् त्वदनुयायिनः। अदितेः पृथिव्याः पृथि
वीमात्रात् अनागान् पापरहितान् सु = सुष्ठु त्वं कृधि कुरु। हे श्रेष्ठतम! मां घोरात् कर्मणः बहिर्निष्कास्य ज्ञानयोगे
मां योजयस्वेति भावः। विष्वक् सर्वतो विद्यमानानि एनांसि मत्कृतक्रियमाणकरिष्यमाण पापानि विशिश्रथः वि
श्लथय शिथिली कुरु। अस्मात् घोरसंग्रामपापात् वियोजय ॥ ४ ॥

व्यामिश्रेणेति = हे भगवन्! "कर्मण्येवाऽधिकारस्ते" इति कर्मयोगप्रतिपादकं वाक्यम्। "बुद्धौ शरणमन्विच्छ" इति ज्ञानयोगप्रतिपादकं वाक्यम्, इति द्वयोर्वाक्ययोः मेलनं व्यामिश्रं तेन व्यामिश्रेण इव ज्ञानकर्मणोः समुच्चयवता वाक्येन इव मे मम बुद्धिं ज्ञानशक्तिं मोहयसीव। तत् तस्मात् कारणात् ज्ञानकर्मणोः मध्ये एकं ज्ञानं कर्म वा मदधिकारानुरूपं निश्चित्य निर्णयं कृत्वा वद कथय। येन ज्ञानेन कर्मणा वा तयोरेकतरेण वा श्रेयः परमपुरुषार्थं कल्याणं वा प्राप्नुयाम् ॥ २॥

**(मू. गी.) व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे।**
**तदेकं वद निश्चित्य येन श्रेयोऽहमवाप्नुयाम्॥२॥**

**(वेदगी.) त्वं विष्णो सुमतिं विश्वजन्यामप्रयुतामेवयावो मतिं दाः।**
**पर्चो यथा नः सुवितस्य भूरेरश्वावतः पुरुश्चन्द्रस्य रायः॥२॥**
**ऋ. अष्ट. ५ अध्या. ६ व. २५ मं. २** ऋ. मं. ६ सू. १०० मं. २

त्वमिति = हे एवयावः = एवाः प्राप्तव्याः कामाः तान् यावयति प्रापयति स्तोतॄन् इति एवयावः तत्संबुद्धौ हे एवयावन्! हे परमात्मन्! हे विष्णो! हे सर्वव्यापक परमेश्वर! त्वं परमात्मा विश्वजन्यां सर्वजनहितकारिणीम्। अप्रयुताम् निर्दोषां — व्यामिश्रवाक्यरहितां सुमतिं ज्ञानकर्मणोः मध्ये या एका सुमतिः सुबुद्धिः अस्ति तां सुमतिं सुज्ञानं दाः मह्यं देहि। यथा येन प्रकारेण सुवितस्य = सुष्ठु प्राप्तव्यस्य भूरेः बहुलस्य अश्वावतः वेगवतः व्यापकस्य पुरु चन्द्रस्य पुरूणां बहूनां चन्द्रस्य चन्द्रवत् शीतलकारकस्य आल्हादकस्येति भावः। रायः श्रेयोमयज्ञानधनस्य पर्चः सम्पर्कः नः अस्माकं ~~भवतु~~ मयि स्यात् ॥ २॥
प्राप्नुयाते

पुरुः बहुः

लोके इति = अस्मिन् लोके पुरा पूर्वकाले मया वेदरूपिणा द्विविधा द्विप्रकारा निष्ठा शास्त्रीयधर्मोऽनुष्ठानं यथाख्या तथा स्थितिः प्रोक्ता कथिता। सांख्यानाम् = वेदान्तैः सम्यक् ख्यायते इति सांख्यं निर्विशेषं ब्रह्म। तदेव ये विदुः ते सांख्याः ब्रह्मविदः तेषां सांख्यानां ब्रह्मज्ञानिनां ज्ञानयोगेन निष्ठा नैश्चल्येन स्थितिः प्रोक्ता। योगिनां कर्मयोगिनां गृहिणां "कर्मयोगेन युज्यतेऽभ्युदयोऽनेनेति योगः, कर्म एव योगः कर्मयोगः तेन कर्मयोगेन निष्ठा नियमस्थितिः प्रोक्ता ३॥

(मू॰ गी॰) लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥३॥

(वेद॰गी॰) अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः।
आदघ्नास उपकक्षास उत्वे ह्रदा इव स्नात्वा उत्वे ददृश्रे ॥८॥
ऋ॰ अष्ट॰ ८ अध्या॰ २ व॰ २८ मं॰ ८ (विचाराऽऽस्पदोऽयं मंत्रः) ऋ॰ मंड॰ १० सू॰ ७१ मं॰ ७

अक्षण्वन्त इति = अक्षण्वन्तः अक्षिमन्तः इन्द्रियाऽनुवर्तिनः कर्मयोगिनः इत्यर्थः। कर्णवन्तः "कर्णो निकृत्तद्वारः गर्भोऽवस्थायामेव केनाऽपि निर्मितबिलः। कर्णवन्तः श्रोत्रेन्द्रियेण उपदेशकस्य गुरोः शब्दस्य श्रोतारः अर्थात् ज्ञानिनः। इति द्विविधा निष्ठा दृश्यते लोके। एवंविधा इमे कर्मयोगिनः ज्ञानयोगिनश्च सखायः समानज्ञानाः सन्तोऽपि मनोजवेषु मनसा गम्यन्ते इति मनोजवाः प्रज्ञादयः तेषु असमाः अतुल्याः बभूवुः भवन्ति। ज्ञानयोगमार्गः अन्यः कर्मयोगमार्गः अन्यः। तेषु मध्ये त्वे एके पुरुषाः आदघ्नासः ह्रदा इव = आस्यशब्दस्य पृषोदरादित्वात् आकारादेशः, आस्यदघ्नाः आस्यप्रमाणोदकाः ह्रदा इव। यथा मुखप्रमाणमात्रे ह्रदे स्नानादिना कार्यं मध्यमतया प्रचलति, एवं मध्यमज्ञानेन मध्यमं ज्ञानमुपजायते, तेन कृत्यं भवति। एवं त्वे एके उपकक्षासः कक्षसमीपप्रमाणोदकाः ह्रदा इव अल्पोदका इत्यर्थः। यथा कक्षमात्रोदके ह्रदे स्नानाय कष्टं भवति। एवमत्यल्पज्ञानेनाऽपि कष्टं भवति। त्वे एके स्नात्वाः "स्नातेः कृत्यार्थे त्वनप्रत्ययः स च अर्हे कृत्यच्श्चेत्यर्हार्थे च भवति। स्नात्वाः स्नानार्हाः अक्षोभ्योदकाः ह्रदा इव पूर्णज्ञानिनः ज्ञानयोगेन पूर्णकर्मयोगिनः कर्मयोगेन ददृश्रे दृश्यन्ते। एषा महाप्रज्ञा स्थिरा बुद्धिर्वा कथ्यते ॥८॥

न कर्मेति = कर्मणाम् = नित्यानां श्रौतादीनाम् अनारम्भात् अनाचरणात् नैष्कर्म्यं निष्कर्मतां पुरुषः न अश्नुते न प्राप्नोति। कर्मणि क्लेशभूयिष्ठत्वबुद्ध्या अलसत्वेन वाऽऽपातवैराग्यात् शिखायज्ञोपवीतत्यागमात्रात् एव सिद्धिं नैष्कर्म्यसिद्धिं विदेहमुक्तिं वा न समधिगच्छति ॥ ४ ॥

(मू० गी०) न कर्मणामनारम्भात् नैष्कर्म्यं पुरुषोऽश्नुते।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥
(वेदगी०) अक्रन् कर्म कर्मकृतः सह वाचा मयोभुवा।
देवेभ्यः कर्म कृत्वाऽस्तं प्रेत सचाभुवः ॥ यजुः ३।४७

अक्रन्निति = ये मयोभुवा मय इति सुखनाम। मयेन सुखेन या भावयति इति मयोभुवा = सुखमंगलकारिण्या वाचा वेदमंत्रेण शुद्धया वाण्या शुद्धेन मनसा च सह कर्मानारंभकर्मसंन्यासपरित्यक्तया वाचा इत्यर्थः। सचाभुवः = सहायकरूपाः ~~परस्परमेवानुग्रहिणः सहभवनशीला~~ कर्मयोगे न सह भवनशीलाः इत्यर्थः। कर्मकृतः कर्माणि लौकिकवैदिकानि कर्माणि कुर्वन्तीति कर्मकृतः, ते कर्मकृतः। कर्म स्वस्ववर्णाऽनुकूलं वेदविहितं कर्तव्यं कर्म अक्रन् कुर्वन्ति। ते वेदोक्तकर्मकर्तारः देवेभ्यः ईश्वरार्थं कर्म यथाविधि नित्यं नैमित्तिकं कर्म कृत्वा अनुष्ठाय अस्तं सुखमयं गृहं शान्तिधामेति भावः। प्रेत प्राप्नुवन्ति ॥ ३।४७ ॥

नहीति= अत्र लोके जातु कदाचित् अपि कश्चित् यो वा को वाऽपि प्राणी क्षणं क्षणमात्रमपि अकर्मकृत् किमपि कर्म अकुर्वन् न तिष्ठति। किन्तु सुषुप्तिं सर्वदा कायिकं वाचिकं मानसिकं चाक्षुरादिकं वा कर्म कुर्वन्नेव तिष्ठति न तु मौनं तिष्ठतीत्यर्थः। हि यस्मात् कारणात् सर्वोऽपि प्राणिवर्गः प्रकृतिजैः सत्वरजस्तमोगुणात्मिका मूलप्रकृतिः तस्याः सकाशात् जाताः प्रकृतिजाः तैः प्रकृतिजैः गुणैः द्रव्यगुणकर्मजातिरागद्वेषादिभिः गुणैः अन्तः प्रेर्यमाणः अवशः अस्वतंत्रः बहिरन्तः नानाव्यापाररूपं कर्म कार्यते ॥ ५ ॥

(मू॰ गी॰) नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

(वेदगी॰) देवस्य सवितुः सर्वे कर्म कृण्वन्तु मानुषाः ॥
अथ॰ ६ कां॰ २३ सू॰ मं॰ ३

देवस्येति २ सवितुः जगतः उत्पादकस्य देवस्य प्रकाशमानस्य परमेश्वरस्य सर्वे सृष्ट्यां मानुषाः "मानुषशब्दः जीवमात्रोपलक्षकः" सर्वे जीवाः कर्म कार्यं कृण्वन्तु कुर्वन्तु॥ "तथा च बृह॰ उप॰ अध्या॰ ३ ब्रा॰ २ श्रु॰ ३, ४, ५, ६, ८ "वाग्वै ग्रहः स नाम्नाऽतिग्राहेण गृहीतो वाचा हि नामान्यभिवदति। जिह्वा वै ग्रहः स रसेनातिग्राहेण गृहीतो जिह्वया हि रसान् विजानाति। चक्षुर्वै ग्रहः स रूपेणातिग्राहेण गृहीतः चक्षुषा हि रूपाणि पश्यति। श्रोत्रं वै ग्रहः स शब्देनाऽतिग्राहेण गृहीतः श्रोत्रेण हि शब्दान् शृणोति। हस्तौ वै ग्रहः स कर्मणाऽतिग्राहेण गृहीतो हस्ताभ्यां हि कर्म करोति" अर्थस्तु सुगम एव।

कर्मेन्द्रियाणीति = विमूढात्मा विमूढः कार्याकार्यविवेकरहितः आत्मा मनो यस्य स विमूढात्मा सन् कर्मेन्द्रियाणि हस्तपादादिपञ्च कर्मेन्द्रियाणि संयम्य संनिरुध्य चक्षुषी निमील्य इन्द्रियार्थान् अन्तः इन्द्रियविषयान् मनसा स्मरन् विचिन्तयन् यः आस्ते "ब्रह्मवित् अहमेव कर्मसंन्यासेन कृतार्थोऽस्मि" इति स मिथ्याचारः असदाचारः कपटचारित्रः आत्मवञ्चकः विद्वद्भिः उच्यते कथ्यते ॥ ६ ॥

(मू· गी·) कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥

(वेदगी·) एवं वाजी हितो नृभिर्विश्वविन्मनसस्पतिः।
अव्यं वारं विधावति। साम· ५ प्रपा· २ अर्द्ध· ५ सू· २· मं· १
ऋ· अष्ट· ६ अध्या· ८ व· १८ मं· १ मंड· ९ सू· २८ मं· १

एष इति = एषः मूढः जीवात्मा वाजी वागादिकर्मेन्द्रियैः हेतुभिः गमनशीलः। नृभिः नेतृभिः चक्षुरादिभिरिन्द्रियैः हितः धृतः अन्तर्विचारस्य पतिः पालयिता पोषित इत्यर्थः। विश्ववित् = विश्वेषाम् इन्द्रियार्थानां वेत्ता। मनसस्पतिः = मनसः अन्तःकरणस्य पतिः ~~स्वामी~~ सन् अव्यम् अविनश्वरं वारं पुष्टं जगति मुहुर्मुहुः जन्ममरणपुष्टं विधावति विविधं गच्छति। अव्यम् = अविसम्बन्धि वारं क्रमं "गड्डरिकाप्रवाहमित्यर्थः। विधावति विविधं गच्छति ॥ १ ॥ तथा प्रकारं चोपनिषद् छान्दो· अध्या· ५ खं· १० श्रु· ७
"य इह कपूयचरणाभ्याशो ह यत्ते, कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा,"

य इति-यः तु अनात्मज्ञः इन्द्रियाणि चक्षुरादीनीन्द्रियाणि रागद्वेषादिदोषाणां गोचराणि न भवेयुः यथा, तथा मनसा नियम्य संनिरुध्य कर्मेन्द्रियैः वागादीन्द्रियैः कर्मयोगं श्रौतं स्मार्तं वा आरभते। श्रद्धया चित्तशुद्ध्यै करोति स विशिष्यते। सः संन्यासापेक्षया श्रेष्ठ इत्यर्थः ॥८॥

(मू· गी·) यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन।।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥८
(वेदगी·) अक्रन् कर्म कर्मकृतः सह वाचा मयोभुवा ॥
देवेभ्यः कर्म कृत्वाऽस्तं प्रेत सचाभुवः। यजुः ३।४८

अक्रन्निति-ये पुरुषाः मयोभुवा मय इति सुखनाम। मयः सुखं भावयतीति मयोभूः तया मयोभुवा सुखमंगलकारिण्या वाचा वागादीन्द्रियेण सह। सचाभुवः "सचा सहेत्यर्थः" सचा सह भवन्तीति सचाभुवः कर्मेन्द्रियैः श्रौतं स्मार्तं धर्मं सहैव कुर्वन्तः कर्मकृतः सुखमयानि कर्माणि कुर्वन्ति, ते कर्मकृतः कर्म श्रौतं स्मार्तं वा कर्म अक्रन् कुर्वन्ति। ते एतत् कृत्वा ~~अनुष्ठाय अस्तम्, असक्तत्वेन सुखमयं गृहं प्रेत~~ देवेभ्यः देवाः प्रकाशमानानि इन्द्रियाणि तदर्थाय कर्म क्रियमाणं कर्म कृत्वा अनुष्ठाय अस्तम् असक्तत्वेन सुखमयं गृहं प्रेत प्राप्नुवन्ति ॥३।४८ यथा चोपनि· कठ अध्या· २ वल्ली २ श्रु· ११ "ओं सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः"

नियतमिति = हि यस्मात् कारणात् अकर्मणः सर्वकर्मपरित्यागात् कर्म = क्रियमाणं कर्म ज्यायः श्रेष्ठम्। अतः त्वं नियतं विध्युक्तं कर्म नित्यं वा नैमित्तिकं वा ईश्वरप्रीत्यर्थं चित्तशुद्ध्यर्थं च कुरु। अकर्मणः ~~निःशेषकर्मपरित्यागात्~~ नियतकर्मकर्तृत्वशून्यस्य ते तव शरीरयात्रा देहजीवननिर्वाहः न प्रसिद्ध्येत् प्रकर्षेण सिद्धिं न प्राप्नुयात् ॥८॥

(भू०गी०) नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥८॥
(वेदगी०) कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे। यजु० ४०।२

कुर्वन्निति = इह अस्मिन् जन्मनि संसारे वा कर्माणि शास्त्रोक्तनित्यनैमित्तिककर्माणि कुर्वन् शतं समाः शतवर्षपर्यन्तं यावदायुरिति भावः जिजीविषेत् जीवितुमिच्छेत्। एवं निष्कामकर्मानुष्ठानेन त्वयि मुमुक्षौ नरे मनुष्ये कर्म कर्तृकर्मफलं जन्मादिरूपत्वेन निबन्धं न लिप्यते न बन्धनहेतुत्वेन भवति। इतः उक्तप्रकारात् भिन्नः मार्गः अन्यथा मुक्तिर्नास्ति ॥ ४०।२। यथा गोभिलगृह्यसूत्रे "अथ य इमां सन्ध्यां नोपास्ते, नाचष्टे न स जयति, ये तु उपासते श्रोत्रिया भवन्ति इत्युपनीताश्छेदनभोजनभेदनमैथुनस्वप्नस्वाध्यानाचरन्ति ये सन्ध्याकाले, ते श्वशूकरशृगालगर्दभसर्पयोनिष्वभिसम्पद्यमानास्तमोऽभिरसं पद्यन्ते। तस्मात् सायं प्रातः सन्ध्यामुपासीत,,

यज्ञार्थादिति = "यज्ञो वै विष्णुः" इत्युक्तेः यज्ञस्य श्रीविष्णोः अर्थं निमित्तं यत्कर्म क्रियते वैदिकं तद् यज्ञार्थं तस्मात् यज्ञार्थात् कर्मणः ईश्वरप्रीति हेतोः कर्मणः अन्यत्र भिन्ने काम्यादौ कर्मणि अयं लोकः अधिकारी ब्राह्मणादिः कर्मबन्धनः कर्मैव बन्धनं जन्मादेर्निबन्धने हेतुर्यस्य स कर्मबन्धनो भवति। तदर्थं तत्कृते तस्य ईश्वरस्य प्रीत्यर्थं त्वं मुक्तसंगः फलाऽभिसन्धिरहितः भूत्वा विहितं कर्म समाचर सम्यक्तया कुरु ।९॥

(मू. गी.) यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसंगः समाचर ॥९॥

(वेदगी.) यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः। यजुः ३१।१६
ऋ. अष्ट. ८ अध्या. ४ व. २. मं. १। अथ. का. ७ अनु. १ सू. ५ मं. १

यज्ञेनेति = देवाः कर्मणा देवत्वं प्राप्ताः पुरुषाः यज्ञेन ज्ञानयज्ञेन यज्ञं "यज्ञो वै विष्णुः" यजुः २२।२० तं यज्ञं विष्णुं परमात्मानम् अयजन्त अनुष्ठानाय संयोजितवन्तः। "यजिरत्र संगतीकरणवाची। तानि धर्माणि अग्निसाधनानि कर्माणि यद्वा नित्यनैमित्तिक धर्म कर्माणि प्रथमानि "प्रथम इति मुख्यनाम। प्रतमानि प्रकृष्टतमानि फलप्रसवसमर्थानि आसन् सन्ति। ते देवाः निष्काम कर्मकर्तारः विद्वांसः ह = खलु। महिमानः नित्यकर्मकर्तृत्वेन महत्त्वयुक्ताः नाकं = कं सुखं, न कम् अकम्, दुःखं तद् अत्र नास्ति इति नाकः "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्पदं स्वपदास्पदम्" इत्युक्ते नित्यसुखरूपं "च "यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" भग. १५।६ इति भगवता प्रोक्तं स्थानं मुक्तिधाम सचन्त प्राप्नुवन्ति। यत्र यस्मिन् नाके पूर्वे पुरातनाः साध्याः = विराडुपास्तिसाधकाः देवाः" यद्वा "प्राणाऽभिमानिनो देवाः साध्या इत्युच्यन्ते। यद्वा साध्याः अहंग्रहोपासकाः, यद्वा साध्यं ज्ञानेन कर्मणा वा प्राप्यं वस्तु येषां ते देवाः साध्याः सन्ति निवसन्ति। तस्मात् इदानीमपि यज्ञाऽधिकारिभिः एवं कर्तव्यमित्यर्थः ॥९॥ यथोक्तं कठ. अध्या. २ वल्ली १ श्रु. २ "पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम्। अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते"

सहयज्ञा इति=पुरा सृष्ट्यादौ प्रजापतिः परमात्मा सहयज्ञाः श्रुत्युक्तैः यज्ञैः सह प्रजाः ब्राह्मणादिवर्णान् सृष्ट्वा रचयित्वा ताः प्रजाः लोकान् उवाच उपदिदेश। यूयम् अनेन यज्ञेन श्रौतेन स्मार्तेन वा प्रसविष्यध्वम् उत्पादयध्वम्। एषः यज्ञः वो युष्माकम् इष्टकामधुक् इष्टान् इच्छाविषयभूतान् कामान् फलविशेषान् दोग्धीतीष्टकामधुक् ~~भव~~ अस्तु भवतु ॥१०

(मू० गी०) सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥१०॥
(वेदगी०) यत्पुरुषेण हविषा देवा यज्ञमतन्वत।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ यजुः ३१।१४ यद्वा
यज्ञो बभूव स आबभूव स प्रजज्ञे स उ वावृधे पुनः। स देवानामधिपतिर्बभूव सो अस्मासु द्रविणमादधातु ॥ अथ० कां० ७ अनु० सू० ५ मं० २ यद्वा
~~देवा यज्ञमृतवः कल्पयन्ति हविः पुरोडाशं स्रुचो यज्ञायुधानि।~~
~~तेभिर्याहि पथिभिर्देवयानैर्यैरीजानाः स्वर्गं यन्ति लोकम्~~ ॥ अथ० कां० १८ अनु० ४ सू० ४ मं० २

यत्पुरुषेणेति=यत् यस्मात् कारणात् हविषा=हविर्भूतेन ग्राह्येण पुरुषेण परमात्मना देवाः विद्वांसः ज्ञानिनः यज्ञं ज्ञानयज्ञम् अतन्वत विस्तारितवन्तः। तथा योगिनोऽपि पुरुषेण एव अमृतभूतेन दीपितेन आत्मना आत्मयज्ञे समधिकृतवन्तः। अस्य यज्ञस्य वसन्तः आज्यं घृतमासीत् अस्ति। ग्रीष्मः=इध्मः प्रकाशकं काष्ठम् आसीत् अस्ति। शरत् हविः हवनीयं वस्तु आसीत् अस्ति। तथा वसन्तशब्देन सात्विको गुण उच्यते। ग्रीष्मशब्देन राजसः गुणः। शरच्छब्देन तामसः गुणः। त्रयो हि गुणाः तत्रात्मयज्ञे योगिनो जुहुति" ३१।१४ यद्वा" यज्ञोऽग्रे सृष्ट्यादौ प्रजोत्पत्त्या सहैव यज्ञः बभूव उत्पन्नः। स यज्ञ एव आबभूव सर्वतः व्याप्तवान्। स यज्ञः एव सर्वप्रजानिमित्ते प्रजज्ञे प्रादुर्बभूव। पुनः सः लोकास्मयः यज्ञ एव वावृधे वृद्धिमाप्नोत्। स यज्ञः एव देवानां विदुषां ज्ञानिनां वा अधिपतिः इष्टकामदातृत्वेन स्वामी बभूव भवति। सः यज्ञ एव अस्मासु=अस्माकम् अत्र विभक्तिव्यत्ययः अस्माकं निमित्ते द्रविणम्

भुक्तिमयं धनं आदधातु = आसमन्तात् धारयति ॥ २ ॥ एतवः सत्यसन्धाः देवाः विद्वांसः ज्ञानिनः वा यज्ञं कल्पयन्ति (विद्वान्) पूजनाय स्थापयन्ति। तत्र यज्ञे हविः आज्यादिकं हविः पुरोडाशं स्रुचः हविःप्रक्षेपकं दर्वी यज्ञायुधानि यज्ञस्य साधनमयानि अस्त्राणि सन्ति। तेभिः तैः देवयानैः देवाः यान्ति येन तैः देवयानैः पथिभिः मार्गैः याहि चल संसारयात्रां कुरु। यैः यज्ञैः ईजानाः यज्ञं कुर्वाणाः मनुष्याः स्वर्गे लोके सुखमयं धाम यान्ति गच्छन्ति ॥ २ ॥

सं.टीका

इष्टानिति = यज्ञभाविताः यज्ञैः श्रौतैः स्मार्तैः भाविताः संभाविता देवाः वो युष्मभ्यम् इष्टान् इच्छाविषयभूतान् भोगान् भोग्यपदार्थान् दास्यन्ते वितरिष्यन्ते। एवं तैर्देवैः दत्तान् पदार्थान् चरुपुरोडाशादिरूपेण एभ्यः देवेभ्यः अप्रदाय अदत्त्वा यः स्वशरीरमेव पोष्टुं भुङ्क्ते सः स्तेनः देवादीनां चोरः शिष्टानां निन्द्यश्च भवति ॥१२॥

**(भ.गी.) इष्टान् भोगान् हि वो देवाः दास्यन्ते यज्ञभाविताः।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥१२॥**
**(वेदगी.) न स सखा यो न ददाति सख्ये सचाभुवे सचमानाय पित्वः।**
**अपास्मात् प्रेयान्न तदोको अस्ति पृणन्तमन्यमरणं चिदिच्छेत् ॥**
**ऋ. अष्ट. ८ अध्या. ६ व. २२ मं. ४** ऋ. मंड. १० सू. ११७ मं. ४

न स इति = सः पुरुषः सखा समानख्यानः मित्रमितियावत् न भवति किन्तु सखा चौर एव सः। यः सचाभुवे सर्वदा सहभवनशीलाय सचमानाय वर्षादिद्वारा सेवमानाय सख्ये मित्रस्वरूपाय देवाय पित्वः पितून् चरुपुरोडाशाद्यन्नानि न ददाति न प्रयच्छति सः सुहृत् न भवतीत्यर्थः। अस्मात् अदातुः पुरुषात् सः अपप्रेयात् अपगच्छेत्। यदि एवं परित्यज्य देवः गच्छेत् तर्हि तदोकः तस्य निवासः निवासस्थाने नास्ति न भवति। स एव देवः पृणन्तं पुरोडाशादिकं हविः प्रयच्छन्तम् अन्यम् अपरम् अरणम् अर्यं स्वामिनं यद्वा रणादिरहितं चित् एव इच्छेत् कामयेत् ॥४॥ अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति। मुण्ड. उप. मुण्डक १ खं. २ श्रु. ३
तथा च "यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च।

यज्ञशिष्टेति = यज्ञशिष्टाशिनः पञ्चमहायज्ञान् विधाय तच्छेषाभ्भक्षणशीलाः पुरुषाः सन्तः सर्वकिल्बिषैः सर्वपापैः मुच्यन्ते त्यज्यन्ते। पापपरित्यागात् चित्तनैर्मल्यं जायते, ततो ज्ञानमुत्पद्यते ततो मुक्तिर्भवतीति वदन्ति। पञ्चमहायज्ञान् अकुर्वाणाः पापाः पापाचारिणः ये पुरुषाः आत्मकारणात् स्वोदरपूर्तिहेतोः पचन्ति पाकं कुर्वन्ति, देवपितृब्राह्मणेभ्योऽदत्त्वा स्वयमेव भुञ्जते। ते तु अघम् अन्नरूपेण स्थितं पापमेव भुञ्जते भक्षयन्ति ॥ १३ ॥

(मू० गी०) यज्ञशिष्टाशिनः सन्तः मुच्यन्ते सर्वकिल्बिषैः।
भुञ्जते ते त्वघं पापाः ये पचन्त्यात्मकारणात् ॥ १३ ॥

(वेद गी०) मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥ ६
ऋ० अष्ट० ८ अध्या० ६ व० २३ मं० ६ मंड० १० सू० ११७ मं० ६ तै० ब्रा० २, ८, ८, ३
निरु० ७।३

यद्वा "स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय।
अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायम्" ऋ० मंड० १० सू० ११७ मं० ३

मोघमिति = अप्रचेताः मूर्खः यद्वा दाने चेतो मनो यस्य न भवति सः अप्रचेताः अदाता, यद्वा पापः मोघं व्यर्थमेव अन्नं विन्दते लभते। इदं सत्यं यथार्थमेव ब्रवीमीति ईश्वरो वदति। न केवलं व्यर्थम् अपि तु तस्य पुरुषस्य सः वधः मृत्युः इत् एवास्ति। यः पापः अर्यमणं नियामकादिदेवान् हविःप्रदानेन न पुष्यति न पोषयति इदमभक्षणेन। नो = नापि सखायं समानख्यानम् अभ्यागतम् अतिथिं मित्रवर्गं च न पोषयति। अत एव केवलादी देवपितृब्राह्मणेभ्योऽदत्त्वा केवलम् असात्त्विकम् अन्नं भुञ्जानः पुरुषः केवलाघो भवति केवलं पापवान् भवति। अघमेव केवलं तस्य शिष्यते नैहिकं नामुष्मिकमिति तस्मात् यथाकथञ्चित् दातव्यमिति अभिप्रायः ॥ ६ ॥ स इति = स पुरुष एव भोजः दानी यः पुरुषः अन्नकामाय अन्नेच्छावते चरते विहरते कृशाय दरिद्रतया दुर्बलाय गृहवे गृहमागते ददाति प्रयच्छति। अतिथियज्ञे यामा गन्तारो देवा अन्ते अस्मै दानिपुरुषाय अरं अलं भवति उत = च अपरीषु अपरेषु पुरुषेष्वपि सखायं कृणुते विधत्ते,, गृहवे = गृहे मनप्रत्ययान्ते कुप्रत्ययः। यामहूतौ = यातेः अर्तिस्तुसुहुसृ इत्यादिना मन्प्रत्ययः ते आहूयन्तेऽत्र यामाहुतिः यतः ॥ तथा चोपनि० बृह० अध्या० १ ब्रा० ५ श्रु० २ "यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति मेधया हि तपसाऽजनयत् पितैकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रं ह्येतत्,,"॥ यथा चोपनिषद् बृह० अध्या० १ ब्राह्म० ५ श्रु० २ पं० [illegible] नि० ४।

अन्नादिति = अन्नात् स्त्रीपुंसाभ्यां भक्षितात् अन्नात् शुक्रशोणितरूपेण परिणतात् भूतानि प्राणिनः भवन्ति उत्पद्यन्ते। पर्जन्यात् मेघात् अन्नसंभवः व्रीहियवादिरूपान्नस्य संभवः प्रादुर्भावः उत्पत्तिः भवति। यज्ञात् = यथाशास्त्रम् अग्नौ हवनकरणात् पर्जन्यः तर्पयिता चासौ जन्यश्चेति पर्जन्यः "तृपेः क्विचि प्रत्यये आद्यन्तयोः वर्णविपर्ययः। यद्वा "जनेभ्यो हितः जन्यः काले२ प्रवर्षणेन तर्पयिता सन् जनानां हितकारी भवति। यद्वा "काले काले प्रवर्षणार्थं रसान् प्रार्जयतीति पर्जन्यः मेघः, वृष्टिरिति यावत् भवति। यज्ञः जगज्जीवनहेतुर्यो यज्ञः स तु कर्मसमुद्भवः = याज्ञिकैः होममंत्रादिक्रिया वैदिकी, कर्म इत्युच्यते तस्मात् सम्यगुद्भवः यस्य स कर्मसमुद्भवः अपूर्वः यज्ञः ॥ १४ ॥

(भू॰ गी॰) अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥

(वेद गी॰) यज्ञो इन्द्रमवर्द्धयत यद्भूमिं व्यवर्तयत। ऋग्॰ प॰ १प्रपा॰
चक्राण ओपशं दिवि ॥ अथ॰ कां॰ २ अनु॰ २ सू॰ २७ मं॰ ५। साम॰ पूर्वार्द्ध
ऋ॰ मं॰ ३ ८ सू॰ १४ मं॰ ५

यद्वा
~~अमूर्या उप सूर्ये याभिर्वा सूर्यः सह। ता नो हिन्वन्त्वध्वरम् ॥ अथ॰ कां॰ १ अनु॰ १ सू॰ ४ मं॰~~
यद्वा
यदीमृतस्य पयसा पियानो नयन्नृतस्य पथिभी रजिष्ठैः। अर्यमा मित्रो
वरुणः परिज्मा त्वचं पृञ्चन्त्युपरस्य योनौ ॥ ऋ॰ मं॰ १ सू॰ ७९ मं॰ ३

यज्ञ इति = यज्ञः अस्माभिः अनुष्ठीयमानं हवीरूपं कर्म इन्द्रं मेघम् अवर्द्धयत् = हविषा अभिवृद्धिम् अकरोत्। कदा इत्युक्ते "यदे यदा दिवि अन्तरिक्षे मेघम् ओपशं सर्वतः उपशयानं चक्राणः कुर्वन् भूमिं पृथिवीं व्यवर्तयत् विवृतां वृष्ट्युदकेन सस्यादिसम्पन्नां भूमिं पृष्टाम् अकरोत् ॥ अथ॰ २०१५ यद्वा "अमूर्या इति = अमूः वृष्टिरूपेण द्युलोकात् आगच्छन्त्यः याः जगत्कारणत्वेन प्रसिद्धाः आपः सूर्ये सूर्यमण्डले उपलभ्यन्ते। "आपः सूर्ये समाहिताः", तै॰ आर॰ १।८।१ याभिः सूर्यम-

ण्डलसमीपस्थाभिः अद्भिः सह सूर्यो वर्तते। सूर्यजलयोः समीपस्थता प्रतीयते। ताः वृष्ट्युदकाः आपः नः अस्माकम् अध्वरं "न ध्वियते ध्वरो हिंसा यस्मिन्निति अध्वरः। ध्वरतिः हिंसाकर्मा। यज्ञं हवनरूपेण क्रियमाणं कर्म हिन्वन्तु प्रीणयन्तु। हिविः प्रीणनार्थः। अथ· कां· २ सू· ४ मं· २

यदी मृतस्येति = यत् = यदा ईम् अयं पर्जन्यः ऋतस्य उदकस्य पयसा पयोवत्सारभूतेन रसेन पियानः पृथिवीम् आप्यायनं कुर्वन् जगतः तृप्तिं कुर्वाणः इति यावत् ऋतस्य वृष्टिजलस्य रजिष्ठैः ऋजुतमैः पथिभिः मार्गैः नयन् पृथिव्यां प्रापयन् अर्यमा = आदित्यः - अर्यमा आदित्यो भवतिनिरु· ११।२३ मित्रः वर्षाकारकत्वेन जगतः मित्रभूतः सन् वरुणः सर्वश्रेष्ठः सर्वैः वरणीयो वा परिज्मा परितो गन्ता वायुः उवरस्य मेघस्य योनौ वृष्ट्युदकोत्पत्तिस्थाने त्वचं वृष्ट्युदकस्याधारभूतं प्रदेशं पृंचन्ति संयोजयन्ति। पियानः = स्फायी ओप्यायी वृद्धौ। बहुलं छन्दसीति शपो लुक्। धातोर्यत्ययेन पीभावः। रजिष्ठैः = ऋजुशब्दात् इष्ठनि विभाषर्जोश्छन्दसि, पा ६·४।१६२ इति ऋकारस्य रत्वम्।" टेरिति,, टिलोपः। पृंचंति = पृची संपर्के रौधादिकः॥ ३"

यथा च तैत्तिरीयोपनि· अनु· २ श्रु· २ [redacted] अन्नाद्वै प्रजाः प्रजायन्ते। याः काश्च पृथिवीं श्रिताः। अथो अन्नेनैव जीवन्ति। अथैनदपियन्त्यन्ततः। अन्नं हि भूतानां ज्येष्ठम्,, तथा च मनुरप्याह अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः,, मनु अध्या· ३ श्लो· ७६

कर्मेति= कर्म हवीरूपं यज्ञात्मकं कर्म, ब्रह्मोद्भवं ब्रह्म वेदः ऋग्आदिः तस्मादुत्पन्नं विद्धि जानीहि । ब्रह्म वेदः अक्षरसमुद्भवं सर्व जगत्कारणात् अक्षरात् परमात्मनः सकाशात् निःश्वासरूपेण समुद्भवम् आविर्भूतं विद्धि जानीहि । तस्मात् कारणात् सर्वगतं सर्वार्थ प्रकाशकत्वेन सर्वस्थितं यद्वा ब्रह्मरूपतया सर्वत्र स्थितं ब्रह्म वेदः ईश्वरो वा नित्यं यज्ञे ब्राह्मणादिभिरनुष्ठेये कर्मणि नित्यं नियमेन प्रतिष्ठितम् ॥ १५ ॥

(मू·गी·) **कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१५**

(वे·गी·) **तस्मात् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे ।**
**छन्दो ह जज्ञिरे तस्मात् यजुस्तस्मादजायत ॥ अथ·कां·१९ अ·१ सू·६ मं·१३**

तस्मादिति= तस्मात् यज्ञात् यज्ञस्वरूपात् वेदात् यज्ञकर्मप्रतिपादकमंत्रसमूहः अजायत उदपद्यत । तस्मात् सर्वहुतः सर्वः सर्वाङ्गः सन् सर्वैः हूयते । यद्वा यस्मै सर्वे लोकाः पूज्यान् देयान् पदार्थान् जुहुति स सर्वहुत् तस्मात् सर्वहुतः परमेश्वरात् ऋचः ऋग्वेदः सामानि गीतात्मकसामवेदः जज्ञिरे प्रादुर्भूतानि । तस्मात् ब्रह्मणः छन्दः = छन्दांसि अथर्ववेदः मंत्रा जज्ञिरे उत्पन्नाः । तस्मात् ब्रह्मणः यजुः यजुर्वेदः अजायत । अतः स च सर्वहुत् ब्रह्म परमात्मा, वेद चतुष्टयात्मकज्ञानं सर्वत्र सर्वेषु यज्ञेषु प्रतिष्ठितं भवति । १३ ॥ वेदमाहात्म्यं वेदेनैव प्रत्यपादि ।

**"पावमानीः स्वस्त्ययनीस्ताभिर्गच्छति नान्दनम् । पुण्यांश्च भक्षान् भक्षयत्यमृतत्वं च गच्छति ॥ साम·उत्तर·अध्या·१ ख·५ मं·३**

पावमानीरिति= पावमानीः पूयमानसोमयज्ञसम्बन्धिन्यः ऋचः स्वस्त्ययनीः कल्याणफलस्य प्रापयित्र्यः सन्ति वेदत्वात् सन्ति । ताभिः ऋग्भिः नान्दनम् = आनन्दकारकम् अक्षरब्रह्म गच्छति प्राप्नोति । अतः तत्र यज्ञात्मके ब्रह्मानन्दे वसन् पुण्यान् पवित्रान् भक्षान् भक्षणीयान् कर्मोद्भवान् भोगान् भक्षयति भुङ्क्ते पुनः अमृतत्वम् च यज्ञामृतत्वं च गच्छति प्राप्नोति ॥ ५ ॥ यथा चोपनिषदि "यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः" बृह·उ·अध्या·४ ब्रा·५ श्रु·११

एवमिति=यः संसारी जीवः एवम् इत्थम् ईश्वरप्रवर्तितं चक्रम् इह लोके नाऽनुवर्तयति नाऽनुतिष्ठति। हे पार्थ! हे अर्जुन! स इन्द्रियारामः इन्द्रियार्थेषु एव अजस्रम् आरमतीति इन्द्रियारामः विषयभोगलम्पटः सन् अत एव अघायुः आयुषः फलम् अघमेव यस्य सोऽघायुर्भूत्वा मोघं व्यर्थं निष्फलम् एव जीवति ॥ १६

(मू.गी.) एवं प्रवर्तितं चक्रं नाऽनुवर्तयतीह यः।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥१६॥

(वेदगी.) यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति।
यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम् ॥
ऋ. अष्ट. ८ अध्या. २ व. २४ मं. ६ यद्वा
ऋ. मं ३ ०. सू. ७१ मं. ६ ऐत.आर. ३।२।१ तैत्ति. आर. १, ३, ०। २।१५।१
"इमे ये नार्वाङ् न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः।
त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः ॥ ९
ऋ. अष्ट. ८ अध्या. २ व. २४ मं. ९

य इति=यः कर्माऽधिकारी पुमान् सचिविदं सचिशब्दः सखिवाची, यः वेदानाम् याथातथ्येन विधत्ते स वेदस्य सखा। तादृशी वेदानां शिरोधारत्वेन कर्त्तारं वेत्तीति सचिवित्, तम् अभिज्ञं सखायं स्वार्थबोधनेन उपकारित्वात् सखिभूतं वेदाज्ञाप्रवर्तितं चक्रं तित्याज त्यजति। वर्तमाने लिट्। आलस्यत्वेन संसारमोहपरत्वेन वा परित्यजति। तस्य पुंसः वाचि सर्वस्यां लौकिक्यां वैदिक्यां वाच्यपि भागः भजनीयः कश्चित् अर्थः नास्ति न विद्यते। ईम्=अयं पुरुषः लोके यत् वेदव्यतिरिक्तं शृणोति, तत् अलकम्=अलीकम् अर्थमेव शृणोति। हि यस्मात् कारणात् सुकृतस्य ~~पुण्य~~ पुण्यस्य पन्थां मार्गं न प्रवेद श्रद्धाराहित्यात् कर्माऽनुष्ठानमार्गं न जानाति।

तस्मात् तदीयश्रवणमपि व्यर्थमेव ॥ ६ ॥ यद्वा

इमे इति ये इमे लौकिकाः संसारासक्ताः पुरुषाः न अर्वाक् ~~[illegible]~~ादि पञ्चमहायज्ञं न चरन्ति न कुर्वन्ति ये परः देवाभिपूजकं यज्ञात्मकं चक्रं न चरन्ति न कुर्वन्ति । ते ब्राह्मणासः वेदतत्वज्ञातारः न सन्ति । न च सुतेकरासः सोमादियज्ञसम्पादकाः सन्ति । ते एते वाचं लौकिकीं वार्ताम् अभिपद्य प्राप्य पापया इन्द्रारा मया क्रीडया सिरीतंत्रे ~~[illegible]~~ स्वव्यर्थजीवनं अविजज्ञयः शास्त्रतत्वानभिज्ञाः तन्वते विस्तारयन्ति ॥ ९५ यथा चोपनिषद्यप्युक्तम् "अथोऽयं वा आत्मा सर्वेषां भूतानां लोकः, स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत् पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितॄणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनाम् । यदस्य गृहेषु श्वापदा वयांस्यापिपीलिकाभ्य उपजीवन्ति, तेन तेषां लोकम्" ॥ बृह० उप० अध्या० १ ब्रा० ४ श्रु० १४

य इति= यः तु मानवः बहिरन्तश्च सर्वत्र ब्रह्मैव भापयति ध्यायतीति, यद्वा भानं प्रत्यग्दर्शनं तदेव सर्वदा भाति भजतीति मानवो ब्रह्मवित् यतिः आत्मरतिः आत्मनि आत्मज्ञाने एव रतिः अन्तःकरणं रमणं क्रीडा यस्य स आत्मरतिः एव भवेत्। किञ्च आत्मतृप्तश्च= आत्मानन्दैकरसेन तृप्तः, आत्मप्राप्त्यैव सर्वत्र प्राप्तोऽलं बुद्धिर्यस्य सः आत्मतृप्तश्च भवेत्। आत्मनि एव सन्तुष्टः चिदानन्दैकरसे ब्रह्मणि एव सन्तुष्टः। तस्य महात्मनः आत्मारामस्य कृतकृत्यस्य मानवस्य कार्यं कर्तव्यं कर्म न विद्यते न अस्ति पर्याप्तकामत्वेन प्राप्तव्याऽभावात् ॥ १७

(मू. गी.) यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥१७॥

(वेद गी.) य ईं चिकेत गुहा भवन्तमा यः ससाद धारामृतस्य।
वि ये चृतन्त्यृता सपन्त आदिद्वसूनि प्र ववाचास्मै ॥४
ऋ. अष्ट. १ अध्या. ५ व. ११ मं. ४

य ईमिति= यः पुमान् ईम् एनम् आत्मानं गुहायां (गुहा=) हृदये भवन्तं वर्तमानं चिकेत जानाति। सदा सर्वत्र विद्यमानं हृदयस्थमेव आत्मानं जानाति अर्थात् यः सर्वदाऽऽत्मरतिः एवाऽस्ति। यश्च ऋतस्य सत्यस्वरूपस्यात्मनः। यद्वा ऋतस्य यज्ञस्य विष्णोरितियावत् धारा धारामिति विभक्तिव्यत्ययः। धारां धारयितारम् एनम् आत्मानम् आससाद प्राप्नोति उपास्ते इत्यर्थः। आत्मतृप्तः यः पुमान् आस्ते। ये च ऋता ऋतानि सत्यानि आत्मनः यज्ञान् वा सपन्तः समवयन्तः समवेतं कुर्वन्तः सर्वान् आत्मनः आत्मनि एव स्पृशन्तः पुरुषाः विचृतन्ति= स्तुतीर्ग्रथ्नन्ति कुर्वन्तीत्यर्थः। आदित् सर्वात्मस्तुत्यनन्तरम् एव अस्मै पुंसे वसूनि सर्ववास योग्यस्थानानि सर्वधनानि वा प्रववाच प्रकथयति परमेश्वरः। आत्मवत् सर्वभूतानि पश्यतः यतेः संसारस्य सर्वाणि वस्तूनि आत्मवत् एव भवन्ति न च तस्य शेषकार्यं विद्यते ॥ ४ ॥ यथा चोपनिषद् छान्दो. प्रपा. ७ खं. २५ श्रु. २ "आत्मैवाऽधस्तात् आत्मोपरिष्टादात्मा पश्चात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरतः आत्मैवेदं सर्वमिति, स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति," तथा च "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति," मुण्डकोपनि. मुण्डक ३ खं. १ श्रु. ३

नैवेति = तस्य "अहमेवेदं सर्वम्„ इत्यात्मविदः यतेः कृतेन अनुष्ठितेन कर्मणा प्राप्तव्योऽर्थः कश्चिदपि नैवास्ति। आत्मतृप्तत्वात् पूर्वोक्तलक्षणस्य तस्य आत्मविदः अकृतेन विहितानाचरणेन कश्चन अनर्थः इह लोके न संभवति। उक्तलक्षणस्यात्मविदः सर्वभूतेषु सकलप्राणिमात्रेषु "ब्राह्मणो वाऽन्यो वा कश्चिदपि अर्थव्यपाश्रयः" किञ्चित्कार्यमुक्तलक्षणमुद्दिश्य क्रियया व्यपाश्रयः आश्रयणीयः नास्ति। १८ ॥

(मू. गी.) नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥
(वेदगी.) यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः कः शोकः एकत्वमनुपश्यतः ॥ यजु. ४०।७

यस्मिन्निति = यस्मिन् अवस्थाविशेषे संसारात् वैराग्यविधायके सम्प्रज्ञातासम्प्रज्ञातसमाधिसमये सर्वाणि भूतानि चेतनाचेतनानि आत्मा एव अभूत् संभवति। आत्मज्ञानिनः "न कृतेन नाकृतेन च प्रयोजनमस्ति सर्वत्रैवात्मरूपत्वात्। एकत्वमनुपश्यतः "आत्मैवेदं सर्वं„ सर्वं खल्विदं ब्रह्म„ इत्यादिवाक्यविचारमवलोकयतः, विजानतः तत्तदवस्थाविशेषे कृतचेतसः आत्मविदः यतेः "सम्प्रति एतत् प्राप्तव्यमस्तीति कः मोहः न कश्चिदपीत्यभिप्रायः। तथा एवंविधस्य यतेः "सम्प्रति एतदनुष्ठानं न कृतमतः दोषो भविष्यतीति कः शोकः न कोऽपि शोक इत्यर्थः ॥ ७ ॥ यथा चोपनिषद्यप्युक्तम्
नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाऽप्रज्ञम्। अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः, माण्डूक्यो. श्रु. ७

तस्मादिति = हि यस्मात् कारणात् पुरुषः स्वयम् असक्तः फलाकांक्षारहितः कर्म लौकिकं वैदिकं वा निष्कामकर्म आचरन् सम्यक् अनुतिष्ठन्नेव परं परमपुरुषार्थं मोक्षम् आप्नोति। तस्मात् कारणात् त्वमपि असक्तः कर्मफलसंगरहितः सन् सततं नित्यं कार्यं कर्तव्यं नित्यं नैमित्तिकञ्च कर्म समाचर श्रद्धाभक्तिभ्याम् ईश्वरार्पणबुद्ध्या सम्यक् कुरु। कर्मणैव हि चित्तशुद्धिं प्राप्य ज्ञानं तज्जन्यं मोक्षञ्च प्राप्स्यसीत्यर्थः। १९॥

(मू. गी.) तस्मादसक्तः सततं कार्यं कर्म समाचर।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः॥१९
(वेद गी.) विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥ यजुः ४०।१४

विद्यामिति = यः आत्मज्ञानी पुरुषः वेदतत्त्वज्ञाता कर्मफलाऽभिसन्धिरहितः वा विद्याम् आत्मज्ञानम् अविद्यां च कर्मलौकिकं वैदिकं कर्म च उभयं "कर्मणा अन्तःकरणस्य शुद्धिः। ज्ञानेन च मोक्षः" इत्युभयं सह एकीभूतं कर्मकाण्डं ज्ञानकाण्डस्य गुणभूतम्। अथ कर्मकाण्डं ज्ञानकाण्डञ्च एकीकृत्य वेद जानाति। सः मुमुक्षुः अविद्यया कर्माऽनुष्ठानेन मृत्युं जन्ममरणरूपप्रवाहं तीर्त्वा उत्तीर्य कृतकृत्यो भूत्वा विद्यया ब्रह्मपदज्ञानेन अमृतत्वं मरणधर्मरहितत्वं मोक्षम् अश्नुते प्राप्नोति॥ ४०।१४

कर्मणेति = जनकादयः ऋभु जनकाश्वपतिभगीरथप्रभृतयः कर्मठाः मानवाः कर्मणा एव श्रौतस्मार्तकर्माऽनुष्ठानेन एव संसिद्धिं मुक्तिसिद्धिम् आस्थिताः प्राप्ताः। अतः त्वमपि लोकसंग्रहं लोकाः पामराः जनाः तेषां संग्रहः सत्कर्ममार्गप्रदर्शनेन तारणम् उन्मार्गात् निवारणञ्च मया क्रियमाणं कर्म लोकोपकाराय भवतीति अवलोकय अपि कर्म कर्तुम् अर्हसि ॥ २०।

(मूलगी.) कर्मणैव हि संसिद्धिमास्थिता जनकादयः।
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥ २० ॥

(वेदगी.) विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः।
सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः ॥

ऋ. अष्ट. १ अध्या. ६ व. ३ मं. ४ ऋ. मं. १ सू. ११० मं. ४ निरु. ११।१६ अथवा "इन्द्रस्य सख्यमृभवः समानशुर्मनोर्नपातो अपसो दधन्विरे। सौधन्वनासो अमृतत्वमेरिरे विष्ट्वी शमीभिः सुकृतः सुकृत्यया" ऋ. मं. ३ सू. ६० मं. ३

विष्ट्वी इति = वाघतः ऋत्विग् नामैतत्। वाघतः ऋत्विजः वैदिकयज्ञाऽनुष्ठातारः। सौधन्वनाः = सुधन्वनः आंगिरसस्य पुत्राः "यथा यास्केनापि एवं प्रत्यपादि" सुधन्वनः आंगिरसस्य त्रयः पुत्राः बभूवुः ऋभुर्विभ्वा वाज इति प्रथमोत्तमाभ्यां बहुवन्निगमाः भवन्ति न मध्यमेनेति,, (नि. ११।१६) ऋभवः उरु भासमानाः कर्माऽनुष्ठानेन अतितेजस्विनः यद्वा ऋतेन सत्येन यज्ञेन वा भान्तीति ऋभवः यद्वा "ऋतेन यज्ञेन सत्येन वा भवन्तीति। यद्वा ऐतिहासिकपक्षे ऋभवः सुधन्वनः राज्ञः पुत्राः। यथा यास्केन निरुक्ते प्रत्यपादि ऋभवः उरु भान्तीति वर्तेन भान्तीति वा,, नि. ११।१५ मर्तासः सन्तः मरणधर्माणः मनुष्याः सन्तः, शमी = कर्माणि "शमीति कर्मनाम,, तरणित्वेन क्षिप्रत्वेन सततमित्यर्थः "तरणिः इति क्षिप्रनाम। विष्ट्वी = कृत्वा।" विष्ट्वी,, यद्यपि कर्मनाम, तथापि अत्र क्रियापरं कृत्वा इत्यर्थः। अमृतत्वम् अमृतभावम् अमरणधर्माणं मोक्षम् आनशुः आनशिरे = प्राप्तवन्तः। "ऋभवो वै देवेषु तपसा सोमपीथम् अभ्यजयन् इत्यादिना ऐतरेय ब्राह्मणे ३।३० सूरचक्षसः = सूरख्यानाः सूर्यविख्याताः सूर्यसमानदर्शनाः सूर्यसमानप्रज्ञाः वा सन्तः, ते ऋभवः कर्माऽनुष्ठातारः संवत्सरे संवत्सराऽवयवभूते वसन्तादिकालकयज्ञे धीतिभिः कर्मभिः कर्माऽनुष्ठानैरितिभावः। समपृच्यन्त समयुज्यन्त। अत्र निरुक्तम् "कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्तासः सन्तोऽमृतत्वमानशिरे सौधन्वना ऋभवः सूरख्याना वा सूरप्रज्ञा वा संवत्सरे समपृच्यन्त धीतिभिः कर्मभिर्ऋभुर्विभ्वावाज इति सुधन्वनः आंगिरसस्य त्रयः पुत्राः बभूवुः निरु. ११। १६, इति ॥ ४

यद् यदिति = श्रेष्ठः श्रौतस्मार्तधर्मानुष्ठाता सदाचार सम्पन्नः पुमान् यत् यत् श्रौतं स्मार्तं कर्म वा आचरति नियमेन अनुतिष्ठति। तद् दृष्ट्वा इतरः अन्यः सर्वसाधारणः जनोऽपि तत् तत् कर्म एव आचरति। सः पूर्वः श्रेष्ठः यत् = शास्त्रं स्वयं प्रमाणं कुरुते "इदमेव प्रमाणमिति प्रवद् रति। लोकः मूढ जनोऽपि तदेव तेन प्रमाणीकृतं शास्त्रम् अनुवर्तते। तदेव शास्त्रं स्वयं प्रमाणं करोति। श्रेष्ठानुसारी भवति पामरः ॥२१

(मू. गी.) यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥२१॥
(वे. गी.) देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ॥११
ऋ. अ. ६ अध्या. ७ व. १ मं. ११ (नूतनः मंत्रः) यद्वा "अनाप्ता ये वः प्रथमा यानि कर्माणि चक्रिरे। वीरान् नो अत्र मा दभन् तद् वः एतत् पुरो दधे,,

देवीमिति = देवाः यज्ञाऽनुष्ठानेन द्योतमानाः विद्वांसः यां देवीं वेदप्रमाणेनोद्भासमानां वाचं वेदशास्त्रोक्तिम् अजनयन्त जनयन्ति वदन्ति कुर्वन्तीति वा। विश्वरूपाः सर्वस्वरूपाः पशवः पशुवन्मूढाः जनाः तामेव विद्वत्प्रमाणीकृतां वाचं वदन्ति उच्चारयन्ति, तद्धशास्त्रोक्तं कर्मैव प्रमाणं मन्यन्ते नान्यदिति। सा वैदिकी श्रेष्ठपुरुषाचरिता च वाक् मन्द्रा हर्षयित्री नोऽस्मभ्यम् इषम् इष्यमाणम् पयोघृतादिरूपमन्नं वा सदाचारसम्पत्तिरूपम् अन्नं वा दुहाना क्षरन्ती धेनुः तर्पयित्री चिन्तामणिरूपा कामधेनुः सुष्टुता अस्माभिः सम्यक्कृतया सेविता वा अस्मान् मूढान् पामरान् जनान् उपैतु उपगच्छतु। यास्कः प्राह "देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च। सा नो मदना अन्नं च रसं च दुहाना धेनुर्वाक् अस्मानुपैतु सुष्टुतेति ॥११।२९॥ अनाप्ता इति = ये प्रथमाः पूर्वकालोत्पन्नाः अनाप्ताः न आप्ताः येभ्यः तथापि धाः अर्थात् सर्वश्रेष्ठा ज्ञानिनः वः युष्माकमभिजनानां निमित्ते यानि यादृशानि कर्माणि चक्रिरे अकुर्वन्। यूयं तद्विरुद्धं कार्यं विधाय नः अस्माकं भाविनः वीरान् वीरपुत्रान् मा दभन् मा नाशयत ते विरुद्धकार्याणि कृत्वा न विनश्येयुः अतः तत् एतत् कर्म वः युष्माकं पुरः सम्मुखे दधे धारयामि ॥ ९०

न मे इति = हे पार्थ! हे अर्जुन! पूर्णकामस्य मे मम कर्तव्यं यत्किञ्चित्कार्यमाप्तव्यमर्थमुद्दिश्य कर्तव्यं कर्म नास्ति। यतः त्रिषु लोकेषु त्रिषु भुवनेषु अनवाप्तम् अप्राप्तं सत् मम क्रियया आप्तव्यं वस्तु किञ्चिदपि न विद्यते। एवमाप्तकामोऽपि अहं कर्मणि लोकसंग्रहात्मके कर्मणि वर्ते एव। चकारोऽत्र निश्चयार्थः। २२ ॥

(मू॰ गी॰) न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२॥
(वे॰ गी॰) नाहं तन्तुं विजानाम्योतुं न यं वयन्ति समरेऽतमानाः।
कस्य स्वित्पुत्र इह वक्त्वानि परो वदात्यवरेण पित्रा ॥
ऋ॰ अष्ट॰ ४ अध्या॰ ५ व॰ ११ मं॰ २

ओतुं विस्तारयितुं

नाहमिति = अहं पूर्णकामः परमेश्वरः तन्तुं स्वनिर्मितं कर्मतन्तुं न विजानामि नाऽवबोधयामि। ~~ओतुम् ओतून आध्वर्यवाणि कर्माणि स्वनिर्मिते न विजानामि नाऽवगच्छामि~~। न च तत्कार्यं ~~संसारबन्धनरूपं~~ कर्मफलं विजानामि। यं संसारबन्धनकरं ~~कर्मविपाकं~~ समरे संगमने देवयजने अतमानाः सततं चेष्टमानाः ऋत्विजः स्वनिर्मिते कर्मकराः संसारिणः (यं संसारबन्धनकरं कर्म) वयन्ति उत्पादयन्ति, ~~तेषां कर्मपूर्णोमीश्वरः सृजतीति~~। इहाऽस्मिन् लोके परः परस्तात् दूरे विषये वर्तमानः लोकसंग्रहार्थं वक्त्वानि परेभ्यः लोकेभ्यः (उच्यमानानि) वक्त्व्यानि ~~~~ अवरेण अर्वाचीनेन पित्रा (उपदेशकादिना) पालकेन ~~~~ योऽनुशिष्टः सन् ~~कस्य~~ पुत्रः [१]पुत्रस्त्राता वदाति वदेत्। अतः न मे कर्म न च तत्फलेच्छा पूर्णकामत्वात्। अतः लोकसंग्रहार्थं कर्म अवश्यमेव कर्तव्यमिति दिक्। २ ॥

वं ६ V ~~कर्मफलसंगतो~~ अ

[१] संसारबन्धनेभ्यः त्राता

यदीति = अहं पूर्णकामोऽपि यदि चेत् अतन्द्रितः तंद्रारहितः अप्रमत्तः इतिभावः जातु क्वचित् कदाचिदपि कर्मणि वेदविहिते कर्मणि न वर्तेयं विहितकर्मा न स्याम् । माम् अकर्माणं दृष्ट्वा सर्वे अन्ये मनुष्याः अपि अकर्माणो भवेयुः इति । हि यस्मात् कारणात् सर्वे मनुष्याः "भगवान् अयं सर्वज्ञः" इति बुद्ध्या मम वर्त्म मदीयम् एव मार्गम् अनुवर्तन्ते अश्रेष्ठस्य श्रेष्ठाऽनुसारित्वात् ॥ २३ ॥

(मू॰ गी॰) यदि ह्ययं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्माऽनुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥
(वेद गी॰) यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमोजसा ।
यः पार्थिवानि विममे स एतशो रजांसि देवः सविता महित्वना ॥
यजुः ११।६ ऋ॰ अष्ट॰ ४ अध्या॰ ४ व॰ २४ मं॰ ३ ऋ॰ मं॰ ५ सू॰ ८१ मं॰ ३ तै॰ सं॰ ४, १, १, २

यस्येति = अन्ये इतरे अपरे साधारणा जीवा एव, तथा देवाः सदाचारेण प्रकाशमानाः विद्वांसः, यस्य देवस्य = कर्माऽनुष्ठानेन प्रकाशमानस्य विदुषः, प्रयाणं प्रगमं मार्गमित्यर्थः अनुययुः अनुगच्छन्ति । देवाः विद्वांसः यतयः देवस्य ~~सर्वप्रकाश~~ ज्ञानेन प्रकाशमानस्य श्रेष्ठस्य ~~पुरुषस्य~~ विदुषः महिमानं महत्त्वम् ओजसा पराक्रमेण तदनुसरणयुता भवन्ति । यः पूर्णकामः सविता सर्वजगदुत्पादकः परमेश्वरः पार्थिवानि रजांसि "लोकाः रजांस्युच्यन्ते" पृथिवीप्रभृतीन् लोकान् महित्वना स्वमहत्त्वेन विममे परिछिनत्ति । स देवः एतशः 'एतवर्णः', सर्वंजगत् इतः प्राप्तः सन् यद्वा एतशः = एत ~~जगत~~ स्मिन् अश्नुते स्थावरजंगमे प्राणभावेन शेते इति एतशः । एवंभूतः सन् राजते इति शेषः । ६ ॥

उत्सीदेयुरिति = अहं पूर्णकामोऽपि सन् चेत् कर्म = वेदविहितं कर्म न कुर्यां न विदध्याम् तर्हि इमे लोकाः जीवाः पृथिव्यादि लोकाः उत्सीदेयुः विनश्येयुः। संकरस्य तत्तज्जातिभेदव्यवस्थापककर्मोऽभावे सर्वैकरूप्यापत्तौ वर्णाः संकीर्येन्ते सोऽपि वर्णसंकरः तस्य वर्णसंकरस्य कर्ता विधाता अहमेव स्याम्। एवं सांकर्यसम्पादनेन इमाः सर्वाः प्रजाः उपहन्याम्। सर्वासां प्रजानां दुर्गतिकर्ता च स्याम् ॥ २४ ॥

(मू॰ गी॰) उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥२४॥

(वे॰ गी॰) भद्रमिच्छन्त ऋषयः स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे।
ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसंनमन्तु ॥ १
अथ॰ कां॰ १९ अनु॰ ५ सू॰ ४१ मं॰ १

भद्रमिति = अग्रे सृष्ट्यादौ ऋषयः अतीन्द्रियार्थद्रष्टारः भद्रं ~~स्वकीयं~~ सांसारिकजीवानां कल्याणम् इच्छन्तः कामयमानाः स्वर्विदः स्वर्गप्राप्तिसाधनानां मुक्तिसुखप्राप्तिसाधनानां कर्मणो वा ज्ञातारः, तपः वैदिके कर्म, दीक्षाम् गुरुदीक्षाम् उपनिषेदुः प्राप्तवन्तः। ततः गुरुदर्शितवैदिककर्मानुष्ठानसामर्थ्यात् राष्ट्रं राज्यम् ओजः च बलञ्च जातं निष्पन्नम्। देवाः लोकसंग्रहार्थं वैदिककर्मानुष्ठानेन द्योतमानाः अस्मै ~~गुरुदीक्षायुक्ताय~~ विद्वांस. साधारणाय पुरुषाय उपसंनमन्तु संयोजयन्तु ॥ १ ॥

सक्ता इति = हे भारत! हे अर्जुन! अविद्वांसः आत्मज्ञानरहिताः मूर्खाः मनुष्याः कर्मणि कर्मजन्यफले स्वर्गपुत्रधनादौ सक्ताः आसक्तिमन्तः भूत्वा यथाविहितं कर्म कुर्वन्ति। तथा तेनैव प्रकारेण वर्तमानः लोकसंग्रहं लोकाः यथा एतादृशं कर्म कुर्वन्तु इति संग्रहं चिकीर्षुः कर्तुमिच्छुः विद्वान् आत्मज्ञानी यतिः स्वयम् असक्तः कर्तृत्वाऽभिनिवेशरहितः कर्मफले निःस्पृहो भूत्वा कर्म कुर्यात् ॥२५॥

(मू॰ गी॰) सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥२५

(वेद॰ गी॰) आ ये विश्वा स्वपत्यानि तस्थुः कृण्वानासो अमृतत्वाय गातुम्।
मह्ना महद्भिः पृथिवी वि तस्थे माता पुत्रैरदितिर्धायसे वेः ॥९
ऋ॰ अष्ट॰ १ अध्या॰ ५ व॰ १८ मं॰ ९ ऋ॰ मंड॰ १ सू॰ ७२ मं॰ ९ तै॰ ब्रा॰ २, ५, ८, १०

आ ये इति = ये विद्वांसः आत्मज्ञानरहिताः मूर्खाः मनुष्याः अमृतत्वाय कर्मजन्यफलाय स्वर्गपुत्रधनादये स्वर्गादिसुखप्राप्तये वा गातुम् गमनाय उपायं कृण्वानासः कुर्वन्तः सन्तः विश्वा = विश्वानि सर्वाणि स्वपत्यानि शोभनानि अपतनहेतुभूतानि स्वर्गादिसुखसाधनज्योतिष्टोमादीनि कर्माणि यथाविधि आतस्थुः आतिष्ठन्ति आसक्तित्वेन कुर्वन्ति। महद्भिः कर्माऽननुष्ठानेन महानुभावैः विद्वद्भिः पुत्रैः पुरु जगतां त्रातृभिः निष्कामकर्मकर्तृभिः ब्रह्मज्ञानिभिः सहिता अदिति अखण्डनीया माता पृथिवी धायसे धारणाय मह्ना स्वकीयेन महिम्ना वितस्थे विशेषेण तिष्ठति। हे अग्ने! यतस्त्वं वेः = निष्कामकर्तृभिः लोकसंग्रहार्थं अनुष्ठितेषु यागेषु चरुपुरोडाशादीनि हवींषि अभक्षयः। वेः = वी गतिप्रजननकान्त्यसनखादनेषु, लङि सिपि अदादित्वाच्छपो लुक्। "बहुलं छन्दस्यमाङ्योगेऽपि", अडभावः। धायसे = "तुमर्थे सेसेनसे०" इति दधातेर्असे प्रत्ययः। "आतो युक्" "चिण्कृतोः" इति युक् ॥ कृण्वानासः = कृवि हिंसाकरणयोश्च। व्यत्ययेनात्मनेपदम् "धिन्विकृण्व्योरच्च" इत्युप्रत्ययः। तत्संनियोगेन नाकारान्तादेशश्च। तस्यातो लोपे सति स्थानिवद्भावाद्गुणाऽभावः। आज्जसेरसुक्। मह्ना = महि इत्यस्य वर्णलोपश्छान्दसः।

न बुद्धीति=विद्वान् ब्रह्मवेत्ता युक्तः आत्मनिष्ठः भूत्वा समाचरन् कालोचितं कर्म कुर्वन् कर्मसंगिनां कर्मफलाऽभिकांक्षिणामित्यर्थः। अज्ञानाम् अनात्मविदां मूढानां वा बुद्धिभेदं "ज्योतिष्टोमादियज्ञेन स्वर्गसुखभोगेच्छायाः या कामना सा बुद्धिः तस्यां भेदं चलनं न जनयेत् न उत्पादयेत्। परन्तु "अक्षय्यं वै चातुर्मास्ययाजिनः" इत्यादि फलसूचकैः वाक्यैः सर्वाणि नित्यनैमित्तिक वैदिक कर्माणि जोषयेत् प्रीणयेत्। कर्मफलस्तवनेन कर्मविधानकामिच्छामेव सम्पादयेदित्यर्थः ॥२६।

(मू॰ गी॰) न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम्।
जोषयेत्सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥२६॥

(वेद गी॰) संजानाना उप सीदन्नभिज्ञु पत्नीवन्तो नमस्यं नमस्यन्।
रिरिक्वांसस्तन्वः कृण्वत स्वाः सखा सख्युर्निमिषि रक्षमाणाः ॥५।

ऋ॰ मं॰ १ सू॰ ७२ मं॰ ५ ऋ॰ अष्ट॰ १ अध्या॰ ५ (५) व॰ मं॰ ५ "शतहस्त समाहर सहस्रहस्त संकिर। कृतस्य कार्यस्य चेह स्फातिं समावह" अथ॰ कां॰ ३ सू॰ २४ मं॰ ५

संजानानाः इति= सकामनिष्कामकर्म सम्यक् जानन्तः एकचित्ताः सन्तः वा युक्ताः आत्मनिष्ठावन्तः इतिभावः। उपसीदन् उपसीदन्ति कर्माणि कर्तुं प्राप्नुवन्ति। पत्नीवन्तः सपत्नीकाः सन्तः गृहस्थधर्माणः गार्हपत्यादीन् अग्नीन् नमस्यं नमस्काराहीन् अभिज्ञु अभिगतजानु यथा स्यात्तथा नमस्यन् अपूजयन् पू नमस्कुर्वन्ति पूजयन्ति लडर्थे लङ्। सखा=सखायः वैदिककर्मकर्तॄणां मित्रभूताः सख्युः सकामकर्मकर्तुः अनभिज्ञस्य मूर्खस्येति यावत् मित्रस्य निमिषि दृष्टौ स्वाः तन्वः कर्मफलवासनारहितत्वेऽपि तन्निमित्ते स्वकीयानि शरीराणि रक्षमाणाः रक्षन्तः सन्तः अनशनादिरूपेण दीक्षानियमेन वा रिरिक्वांसः रिक्तीकुर्वन्तः शोषयन्तः कृण्वत कुर्वन्ति, यागान् कुर्वन्तीत्यर्थः। "देवा वै यज्ञमतन्वतेति श्रुतेः। नमस्यन् "नमोवरिवश्चित्रङः" इति पूजार्थे क्यच्। रिरिक्वांसः=रिचिर विरेचने, लिटः क्वसुः। निमिषि=मिष स्पर्धायाम्, अत्रोपसर्गबलाद् दृष्ट्यर्थः ॥५॥ "यद्वा" हे शतहस्तेति=हे शतहस्त कर्मकरणे शतशः हस्ताः यस्य तथाभूत मनुष्य समाहर=कर्मविधानम् एकत्रीकुरु। हे सहस्रहस्त! कर्मकरणे सहस्राणि हस्ता यस्य तथाभूत हे उद्यमिन् संकिर=त्वं सम्यक्तया स्वकृतं विस्तारय यद्वा परेभ्यः दानं देहि। कृतस्य स्वेन कृतस्य कार्यस्य कर्मणः इह अस्मिन् संसारे स्फातिं वृद्धिं समावह कुरु ॥५॥

प्रकृतेरिति = प्रकृतेः - प्रकृतिर्माया आकाशादिमहाभूतरूपेण परिणता तस्याः प्रकृतेः गुणैः गुणाः कार्यभूताः देहेन्द्रियादयः तैरेव गुणैः क्रियमाणानि सर्वशः सर्वाणि कर्माणि प्रति अहंकारविमूढात्मा = देहेन्द्रियादिषु अहंकारेण विमोहितः अहंप्रत्ययार्थत्वेन अविदितः आत्मा येन सोऽहंकारविमूढात्मा अविद्वान् कर्ता स्प्रष्टाऽहं श्रोता घ्राता, रसयिता, मन्ता, बोद्धा, कर्ता, भोक्ताऽहमिति मन्यते। प्रारब्धकर्मवशात् देहेन्द्रियैः कृतदुष्टादुष्टकर्मसु मया पापपुण्ये कृते इति तत्तत्क्रियायाः कर्तारमेव पश्यतीत्यर्थः २८

(मूलगी.) प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहंकारविमूढात्मा कर्ताऽहमिति मन्यते ॥ २८

(वेदगी.) मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम्।
अमन्तवो मान्त उपक्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥ ४

ऋ. अष्ट. ८ अध्या. ७ व. ११ मं. ४ ऋ. मंड. १० सू. १२५ मं. ४ अथ. कां. ४ सू. ३० मं. ४

नूतनो मंत्रः - २ यद्वा "ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः। वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे" अथ. कां. १ सू. १ मं. १

मयेति = यो जीवः अन्नम् अत्ति स भोक्तृशक्तिरूपया प्रकृत्या पञ्चमहाभूतरूपेण परिणतया प्रकृत्या भक्षयति। यश्च विपश्यति आलोकयति। यश्च प्राणिति श्वासोच्छ्वासादिव्यापारं करोति। य ईम् एवम् उक्तं शृणोति सोऽपि मया दृष्ट्यादिशक्तिरूपया प्रकृत्या आलोकनादिकर्म करोति, न च तदाऽऽत्मा करोति। ये एवंविधम् ~~अन्तर्यामिरूपेण~~ स्थितं माम् ~~आत्मानं~~ प्रकृति न जानन्ति ते अमन्तवः अमन्यमानाः ~~आत्मतत्त्वं~~ प्रकृतितत्त्वम् अजानन्तः उपक्षियन्ति उपक्षीणाः संसारे आसक्तिसहिताः भवन्ति मद्विषयज्ञानरहिताः इत्यर्थः। हे श्रुत! विश्रुत! सखे श्रुधि मया कर्तृत्वादिप्रतिपादकं वक्ष्यमाणं वचनं शृणु। श्रद्धिवम् = श्रद्धया युक्तं श्रद्धायत्नेन लभ्यमित्यर्थः। ईदृशम् कर्तृत्वभोक्तृत्वविवेकात्मकं वस्तुतत्त्वं ते तुभ्यं सत्पात्राय सुधिये वदामि उपदिशामि ॥ ४

। । यद्वा य इति ये त्रि-सप्ताः ३ × ७ = २१ पदार्थाः अर्थात् पञ्चमहाभूतानि, तन्मात्राश्च अहंकारश्च इति सप्त पदार्थाः त्रिभिः सत्त्वरजस्तमोभिर्गुणैः गुणिताः एकविंशतिसंख्याकाः। यद्वा "पञ्चभूतानि, पञ्च प्राणाः, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, अन्तःकरणञ्चेत्येकविंशतिः पदार्थाः विश्वा विश्वानि सर्वाणि रूपाणि चेतनाचेतनपदार्थान बिभ्रतः धारयन्तः परियन्ति गतिं कुर्वन्ति। वाचस्पतिः आत्मा तेषामेकविंशतिपदार्थानां बला = बलानि सामर्थ्यमितियावत् अद्य सदा मे मम तन्वः तनुमध्ये दधातु धारयतु ॥ १

तत्त्वविदिति= हे महाबाहो! हे अर्जुन! गुणकर्मविभागयोः गुणाः दशेन्द्रियाणि बुद्धिः मनश्च। कर्माणि = दर्शनवचनादानादिकाः क्रियाः चक्षुरादिदशेन्द्रियाणाम्। बुद्धेरहंक्रिया, संकल्पनक्रिया च मनसः। एवं गुणविभागः कर्मविभागश्च। तयोः गुणकर्मविभागयोः तत्त्ववित् आत्मनश्च तत्त्वं याथात्म्यं सम्यक् वेत्तीति तत्त्ववित् विद्वान् तु गुणाः चक्षुरादयः एव गुणेषु रूपादिषु वर्तन्ते। वागादयः वचनादानादिषु वर्तन्ते। बुद्धिः तेषां कर्मसु अहं कर्ता इत्यहंकरोति, अहं तु न शृणोमि, न पश्यामि, अहं तु नित्यः कूटस्थः चिदात्मना सर्वदा तिष्ठामीति मत्वा निश्चित्य तेषां कर्मसु न सज्जते, तत्र अहंता ममतादिकं न करोतीत्यर्थः। २८

(मू. गी.) तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः।
गुणाः गुणेषु वर्तन्त इति मत्वा न सज्जते ॥२८॥

(वेदगी.) ऋतस्य प्रेषा ऋतस्य धीतिर्विश्वायुर्विश्वे अपांसि चक्रुः।
यस्तुभ्यं दाशाद्यो वा ते शिक्षात्तस्मै चिकित्वान् रयिं दयस्व ॥३॥
ऋ.१ अष्ट.५ अध्या.१२ व.३ मं. ऋ.मं.३.१ सू.६८ मं.५

ऋतस्येति= विश्वे सर्वे चक्षुर्वागादीन्द्रियग्रामाः विश्वायुः सर्वायुर्यावत् अपांसि दर्शनवचनादानादीनि कर्माणि चक्रुः कुर्वन्ति। स्वयमेवेन्द्रियाणि कुर्वन्ति उत वा तेषां तद्भिन्नः कश्चिदन्यः कारयिता = इत्यत आह। "ऋतस्य = अविचलात्मनः कूटस्थस्य आत्मनः प्रेषाः= प्रेरणानि सन्ति*। अथ ऋतस्य जीवात्मनः धीतिः धीयते पीयतेऽस्मिन् इति वा धीतिः भावना वागादिव्यवहारयामः इति बोधकः यः मूढः अनात्मज्ञः पुरुषः तुभ्यं जीवात्मने एतं दर्शनवागादानादि व्यवहरणं दाशात् = देयात्। यो वाऽन्यः पामरः जीवः ते तव शिक्षात् त्वदीयं कर्म कर्तुं शक्तो भूयासमिति इच्छति उभयविधाय तस्मै जीवात्मने चिकित्वान् तत्कृतं ज्ञाने कर्माऽनुष्ठानं वा जानन् त्वं रयिम् अनासक्तिरूपं वित्तं दयस्व देहि। दाशात् = दाशृ दाने। शिक्षात् = शक्लृ शक्तौ इच्छार्थे सन्। "सनि मीमाघुरभलभशक— इत्यकारस्येत्वादेशः। अत्र लोपोऽभ्यासस्य„ इत्यभ्यासलोपः। स्कोः संयोगाद्योः„ इतीसः सलोपः। चिकित्वान् चकित ज्ञाने। दयस्व दयः दानगतिरक्षणहिंसादानेषु। ३॥

* प्रेषिताः इतीकृत प्रकृतिः, तद्गुणश्च, यैः इन्द्रियाणि स्वस्वव्यापारं कुर्वन्ति।

प्रकृतेः मायायाः गुणसंमूढाः गुणैः सत्त्वरजस्तमोभिर्गुणैः तद्विकारैश्च मोहितचित्ताः ते मूढाः

प्रकृतेरिति ~~मूढा~~ ते आत्मविवेकशून्याः प्रकृतेः पूर्वलक्षणया मायायाः गुणकर्मसु गुणेषु चक्षुरादिषु कार्येषु दर्शनादिषु "अहं श्रोता अहं द्रष्टा इत्यभिबुद्ध्या सज्जन्ते अभिनिवेशं कुर्वन्ति। कृत्स्नवित् ब्रह्मवेत्ता, अकृत्स्नविदः अज्ञान् आत्मविवेकशून्यान् मन्दान् प्रमादान् तान् न विचालयेत् कामनया कर्म न कर्तव्यम्। कर्मफलं बन्धनकरम् इत्यादि वचनैः न विक्षेपयेदित्यर्थः। २९।

(मू. गी.) प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु।
तान् कृत्स्न[redacted]विदो मंदान् कृत्स्नविन्न विचालयेत् ॥२९

(वेदगी.) . . . . . . . . . . . . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . . . . . . . . . . . . . . .

मयीति = लोकसंग्रहनिमित्तमुद्दिश्य कर्मकर्ता आत्मविवेकी त्वम् अध्यात्मचेतसा आत्मानमधिकृत्य प्रवृत्तम् अध्यात्मं चेतो ज्ञानम्। अध्यात्मं तच्चेतश्च तेन अध्यात्मचेतसा "ब्रह्मार्पणं ब्रह्महविः" इतिवक्ष्यमाणलक्षणया प्रत्यग्दृष्ट्या। सर्वं ब्रह्मैवेति दर्शनेन सर्वाणि नित्यनैमित्तिकानि कर्माणि मयि सर्वात्मनि ब्रह्मणि संन्यस्य संस्थाप्य निराशीः निराकाङ्क्षः सन् निर्ममो भूत्वा वध्यमानेषु भ्रात्रादिषु ममतारहितो भूत्वा विगतज्वरः "एते मदीया मया हन्यन्ते इति यो ज्वरः सन्तापः स विगतो यस्य स विगतज्वरः निःशोको भूत्वा युध्यस्व युद्धं कुरु। लोकसंग्रहार्थं कर्म कुरु इत्यर्थः। ३० ॥

(मू. गी.) मयि सर्वाणि कर्माणि संन्यस्याऽध्यात्मचेतसा।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३०

(वेदगी.) प्रमुञ्चन्तो भुवनस्य रेतो गातुं धत्त यजमानाय देवाः।
उपाकृतं शशमानं यदस्थात् प्रियं देवानामप्येतु पाथः ॥ २अथ. कां. २सू. ३४मं. २

प्रमुञ्चन्तो इति = हे देवा! हे ज्ञानिनः पुरुषाः!!! भुवनस्य उत्पन्नस्य देहस्य विश्वमात्रस्य वा रेतः मूलतत्त्वं कर्म, वा तत्फलं वा प्रकृतितत्त्वं प्रमुञ्चन्तः मयि त्यागं कुर्वन्तः मयि अर्पयन्तो वा यजमानाय भगवतः उपासकाय स्वात्मने गातुं ज्ञानमार्गं धत्त आश्रयत। यत् स मुमुक्षुः यदा देवानां विदुषां ज्ञानिनां प्रियं पाथः मार्गम् अस्थात् दृढरूपेण स्थितिं कुर्यात्। तदा स एव उपाकृतं स्वसम्मुखे यथावसरं साधनैः संस्कृतं शशमानम् अस्त्रादिभिः कामयमानं पाथः सांसारिकयुद्धमार्गम् एतु प्राप्नोतु
यद्वा यदा स जीवः देवानामिन्द्रियाणां प्रियम् अभीष्टं पाथः मार्गम् अस्थात् स्थितिं कुर्यात् तदा

ये मे इति- ये विवेकिनः मानवाः मनुष्याः इदं पूर्वोक्तं लक्षणं मे ममेश्वरस्य मतं शासनम् अनसूयन्तः असूयारहिताः श्रद्धावन्तः श्रद्धां भक्तिं च कुर्वन्तः सन्तः नित्यम् अनुतिष्ठन्ति सम्यक्तया कुर्वन्ति । ते सत्वशुद्ध्या आत्मज्ञानं प्राप्य कर्मभिः पुण्यापुण्यैः लक्षणैः नाना-दुःखहेतुभिः संचितामिः मुच्यन्ते ॥ ३१ ॥

(मू० गी०) ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥३१॥
(वेद्गी०) यः पावमानीरध्येत्यृषिभिः संभृतꣳ रसम् ।
सर्वं स पूतमश्नाति स्वदितं मातरिश्वना ॥
साम० उत्तरा० अध्या० १ खं० ७ मं० १ अथ च
ऋ० अ० ७ अध्या० २ व० १८ मं० ३१ मं० ९ सू० ६७ मं० ३१

यः विवेकी मानवः पावमानीः पवित्रकर्त्रीः ऋषिभिः ब्रह्मविद्भिः यतिभिः मंत्रद्रष्टृभिः संभृतं परिपालितं संपादितं रसम् उपदेशरसभूतं सारम् अध्येति नित्यम् अधीते अनुतिष्ठति । स जनः सर्वं पूतं पवित्रं मोक्षम् अश्नाति गृह्णाति प्राप्नोतीत्यर्थः । तच्च मोक्षपदम् मातरिश्वना मातरि अन्तरिक्षे श्वसिति इति मातरिश्वा, अन्तरिक्षवत् सर्वत्र व्याप्तेन परमात्मना स्वदितं स्वादूकृतम् अस्ति । स नरः तमेव अग्र्यं मोक्षमित्यर्थः अश्नाति ॥ १ ॥

ये त्विति = ये तु अविवेकिनः एतत् मदुक्तं मतं शासनम् अभ्यसूयन्तः अत्यन्तं दूषयन्तः सन्तः न अनुतिष्ठन्ति दुराग्रहेण मदनुशासनं न पालयन्ति। सर्वज्ञानविमूढान् ब्रह्मज्ञानशून्यान् अचेतसः अविवेकिनः तान् नष्टान् विनष्टपुण्यलोकान् विद्धि जानीहि। ३२

(मू॰ गी॰) ये त्वेदभ्यसूयन्तो नाऽनुतिष्ठन्ति मे मतम्।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः॥ ३२॥
(वेदगी॰) . . . . . . . . . . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . . . . . . . . . . .

सदृशमिति=ज्ञानवान् अपि ब्रह्मज्ञानी ब्रह्मनिष्ठः यतिरपि स्वस्याः प्रकृतेः वासनायाः सदृशम् अनुरूपम् आहारादौ चेष्टते शरीरयात्रा निर्वापनहेतोः प्रकृतिर्दुर्निवारा। भूतानि सुखदुःखयोः अनुभूत्यै स्वस्वकर्मणा भवन्ति इति भूतानि सर्वे प्राणिनः स्वस्वजन्मानुरूपेण प्रकृतिं रागद्वेषादिगुणवतीं वासनात्मिकां यान्ति प्राप्नुवन्ति। निग्रहः = "वयं न किञ्चित्कुर्म इति निग्रहः तात्कालिकेन्द्रियनिरोधः किं करिष्यति ॥ ३३ ॥

(मू. गी.) सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥

(वेद गी.) आस्थानमस्य भूतस्य विदुष्टद्वेधसो न वा ॥ २ -
अथ. कां. १ सू. ३२ मं. २

आस्थानमिति = अस्य सर्वतः दृष्टिगोचरमागतस्य भूतस्य उत्पन्नभूतस्य प्राकृतस्य पदार्थमात्रस्य आस्थानम् आश्रयभूतां मूलप्रकृतिं तत् = ते वेधसः बुद्धिमन्तः ज्ञानिनः विदुः जानन्ति न वा इत्यत्रेन्द्रियनिग्रहाभावात् संदेहो वर्तते ॥ २

इन्द्रियस्येति = इन्द्रियस्य अर्थे सर्वेषाम् इन्द्रियाणां विषये शब्दादौ रागद्वेषौ इष्टे विषये रागः, अनिष्टे विषये द्वेषः इत्येवं व्यवस्थितौ। प्रतिविषयं नियमेन स्थितौ भवतः। तयोः रागद्वेषयोः वशम् अधीनतां न गच्छेत्। द्रव्यगुणादौ समीचीनत्वबुद्धिं न विदध्यात्। हि यस्मात् कारणात् तौ रागद्वेषौ अस्य धर्मरतस्य मोक्षमार्गस्य परिपन्थिनौ पथि चौरौ इव स्तः ॥ ३४ ॥

(मू॰ गी॰) इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥

(वेदगी॰) यो नः पूषन्नघो वृको दुःशेव आदिदेशति। अप स्म तं पथो जहि ॥ २ ॥
अप त्यं परिपन्थिनं मुषीवाणं हुरश्चितम्। दूरमधि स्रुतेरज ॥ ३ ॥
ऋ॰ अष्ट॰ १ अध्या॰ ३ व॰ २४ मं॰ २, ३ ॥ ऋ॰ मं॰ ३ १ सू॰ ४२ मं॰ २, ३

हे पूषन्! हे देहपोषक जीवात्मन्! यः रागद्वेषरूपः प्रतिपक्षी नः अस्मान् सन्मार्गगन्तॄन् उद्दिश्य आदिदेशति = अनेन रागद्वेषात्मकेन मार्गेण गन्तव्यमित्येवमाज्ञापयति। स च प्रतिपक्षी अघः पापकर्मकारयिता, अतः मुक्तिमार्गात् रोधकः अत एव आहन्ता। अथ च वृकः = वर्कते इति वृकः तस्करः, आत्मतत्त्वापहर्ता इत्यर्थः। अथ च दुःशेवः = दुष्टं शेवं यस्यासौ दुःशेवः यद्वा दुःखेन सेव्यते इति दुःशेवः। सेवितुं दुःशकः। यद्वा दुष्टसुखो वा। अतस्तं तादृशं प्रतिपक्षिणं पथः मुक्तिमार्गात् अपजहि स्म अवश्यम् पाकुरु। येन त्वं मुक्तो भूयाः इत्यर्थः। पूषा पोषयते इति तै॰ ब्रा॰ २।२।२। ॥ २ ॥
अप त्यमिति = त्यं तादृशं रागद्वेषौ, मुषीवाणं तस्कररूपं "मुषीवेति तस्करनाम" मुषीवान् मलिम्लुच इति तन्नामसु पाठात्। हुरश्चितम् = हुरश्चिनोतीति हुरश्चित् = हूर्छा = कौटिल्ये। कौटिल्यानां संचेतारं परिपन्थिनं पथिचौरं रागद्वेषात्मकं मुक्तिमार्गप्रतिबन्धकमित्यर्थः। स्रुतेः स्वात्मज्ञानरूपमार्गात् अधिदूरम् अत्यन्तदूरदेशं प्रति अपाज अपगमय दूरीकुरु इतिभावः। परिपन्थिनम् = "छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि" पा॰ ५।२।८९ इति शत्राववस्थेय इनिप्रत्ययान्तो निपातितः ॥ ३ ॥

श्रेयानिति = स्वनुष्ठितात् = यथारीति सम्यक्तया नियमेन आचरितात् परधर्मात् विगुणः गुणादिभिः सम्यगनुष्ठानरहितोऽपि स्वधर्मः कर्तव्यत्वेन स्वस्य यः शास्त्रेण विहितः स एव स्वधर्मः पुरुषस्य श्रेयान् श्रेष्ठतरः। यथा स्नानजपाद्यपेक्षया ज्ञानसाधनैकप्रयोजनः सर्वकर्मसंन्यास एव श्रेष्ठः धर्मः, तथा परधर्मकर्मसंन्यासापेक्षया अन्तःकरणशुद्ध्येकप्रयोजनः कर्मयोग एव श्रेष्ठः धर्मः। स्वधर्मे नियमाऽनुकूलं चलतः नरस्य निधनं मरणं श्रेयः श्रेयसे भवति न तु कश्चिदनिष्टाय। परधर्मः यथाशास्त्रमनुष्ठितोऽपि परधर्मः भयावहः भयं यमदूतेभ्यो नरकं वावहति सम्पादयतीति भयावहः। नरकादिदुःखप्रवाहहेतुरेव भवतीत्यर्थः।

(मू. गी.) श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥

(वेदगी.) वृषा जजान वृषणं रणाय तमु चिन्नारी नर्यं ससूव।
प्र यः सेनानीरध नृभ्यो अस्तीनः सत्वा गवेषणः स धृष्णुः ॥ ५ ॥
ऋ. अष्ट. ५ अध्या. ३ व. १ मं. ५ ऋ. मं. ७ सू. २० मं. ५

वृषेति = वृषा सेक्ता परमपिता परमात्मा वृषणं जगति लोकवित्तपुत्रैषणानां वर्षयितारं स्वधर्मपालयितारं जीवात्मानं रणाय लोकयात्रायुद्धाय जजान जनयामास। जीवात्मानः स्वस्वधर्मे स्थित्वा जीवनयात्रां कुर्युः न तु परधर्मे रताः इत्यर्थः। अतः तमु तमेव नर्यं नरेभ्यो हितं नारीः = कर्मफलप्रदात्री ब्रह्मशक्तिः तत्तत्कर्मफलाऽनुरूपं स्वस्वधर्माऽनुष्ठातारं ससूव सुषुवे। अध = अपि च यः स्वधर्मस्थितः नरः नृभ्यः नृणां सेनानीः सेनानां स्वधर्माऽनुकूलकर्मरूपसेनानां नेता सन् प्राप्ति प्रभवति। स एव जीवात्मा धृष्णुः परधर्मधर्षणशीलः, गवेषणः इन्द्रियधर्माणाम् अन्वेष्टा सत्वा = परधर्मप्रवृत्तिकारकाणां लोभमोहादिशत्रूणाम् सादकः विनाशकः इत्यर्थः। इनः स्वसर्वैषणानां स्वामी मुक्तिधामगामी भवति ॥ ५ ॥

अर्जुन उवाच। अथेति = हे वार्ष्णेय! ब्रह्मानन्दामृतं वर्षतीति वृष्णिः ज्ञानं, तेन वृष्णिना अवगम्यते इति वार्ष्णेयः परमात्मा, तत्सं
बुद्धौ हे वार्ष्णेय! हे वृष्णिकुलोत्पन्न श्रीकृष्ण! बलात् बलात्कारेण नियोजितः प्रेष्य इव अयं पुरुषः केन प्रयुक्तः स्वयं पाप
साध्यं फलम् अनिच्छन्नपि पापं चरति पापं करोति ३६ श्रीभगवानुवाच। काम इति = रजोगुणसमुद्भवः = रजसः गुणः रागः
रञ्जनात्मिका सामान्या इच्छा एव कामम् उद्भावयति। इत्येषः कामः एव पुंसः संसारकारणं केनचित्स्वविषये प्रतिबद्धे क्रो
धात्मना परिणमतेऽतः क्रोधोऽपि एषः काम एव प्रवृत्तिहेतुरस्ति। एषः कामः एषः क्रोधः महाशनः = महत् अतीव अ
शनम् अभ्यवहरणम् यस्य सः महाशनः तत एव महापाप्मा महान् पाप्मा दोषो यस्मात् पुरुषस्य यातीति स महापाप्मा
यतः कामाऽऽविष्टः नरः स्वस्त्रादियोनिम् अगणयन् अन्तुलादिधनमपि आददाति। तथा क्रुद्धः सन् गुरुम् अपि
अवमनुते, गाम् अपि च हन्ति। अतः इह अस्मिन् संसारे एनम् कामम् एव क्रोधम् एव वैरिणं शत्रुं विद्धि जानीहि ३६,३७

अर्जुन उवाच

(मूलगी॰) अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः॥३६॥

श्रीभगवान् उवाच

काम एष क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥३७॥

(वेदगीता) यो देवो विश्वाद् यमु काममाहुः यं दातारं प्रतिगृह्णन्तमाहुः।
यो धीरः शक्रः परिभूरदाभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत्॥४
अथ॰ कां॰ ३ अनु॰ ५ सू॰ २१ मं॰ ४

यदिति = यः देवः प्रकाशकः रजोगुणमयः द्योतनशीलः क्रोधः विश्वाद् विश्वं सर्वम् अत्ति भक्षयतीति विश्वात् सर्वेशमकार्य-

विनाशक इत्यर्थः। यम् = यम् क्रोधं ~~कामम्~~ एव कामम् वैषयिकीम् प्रबलेषुम् आहुः कथयन्ति। यं कामं क्रोधं च दातारम् अनिष्टफलदातारं तथा प्रतिगृह्णन्तं नरकाद्यनिष्टफलप्रतिग्रहीतारम् आहुः कथयन्ति। कामक्रोधौ यत्र उत्पद्येते तत्र एव अनिष्टं जायते इतिभावः। यः च जीवः धीरः कामक्रोधविरहितः सन् धैर्यवान् अस्ति। स च शक्रः सर्वशुभकार्यकरणे शक्तः। तथा च श्वेतगुणत्वेन प्रतिपाद्यसत्वगुणोपविष्टः भवति। स च धीरत्वेन परिभूः कामक्रोधशत्रूणां परिभविता भवति अत एव स च अदाभ्यः केनापि कामक्रोधादिभिः अहिंसनीयः भवति। अतः तेभ्यः अग्निभ्यः आत्मज्ञानाग्निना सुवर्णवद्दृढेभ्यः जीवेभ्यः एतत् प्रदीयमानम् सदुपदेशरूपं हविः हुतम् दत्तम् अस्तु दत्तं भवतु ॥ ४ ॥

वेदगीता "उदस्य श्यावौ विथुरौ गृध्रौ द्यामिव पेततः
उच्छोचनप्रशोचनावस्योच्छोचनौ हृदः॥ अथ॰ कां॰ ७ सू॰ ९५ (१००) मं॰ १

उदस्येति = अस्य जीवात्मनः विथुरौ व्यथावर्द्धकौ गृध्रौ सांसारिकपदार्थेषु मोह लोभकारिणौ श्यावौ श्यामवर्णौ कामक्रोधौ गृध्रौ मांसलोलुपौ गृध्रपक्षिणौ इव द्याम् आकाशं हृदयाकाशं च उत्पेततः उद्गच्छतः। (उच्छोचनप्रशोचनौ कामक्रोधौ द्वावेव शोकवर्द्धकौ देहशोषकौ च स्तः। इमौ कामक्रोधौ अस्य मुमुक्षोः जीवात्मनः हृदः मनसः उच्छोचनौ अत्यन्तं शोषकौ स्तः। ॥

धूमेनेति = यथा वह्निः स्वयंप्रकाशरूपोऽग्निः धूमेन अप्रकाशस्वरूपेण धूमेन आव्रियते आच्छाद्यते। यथा आदर्शः दर्पणं स्वमुखप्रतिबिम्बप्रदाता मलेन श्वासादिना आव्रियते। यथा गर्भः चेतनः शिशुः उल्बेन अचेतनेन जरायुणा आव्रियते तथा तेनैव प्रकारेण इदं पुरुषस्य ज्ञानं तेन कामेन क्रोधेन वा आवृतम् तिरोहितम् अस्ति ॥३८॥

(मू॰ गी॰) धूमेनाव्रियते वह्निर्यथादर्शो मलेन च।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥३८॥

(वेदगी॰) यन्मे मनसो न प्रियं न चक्षुषो यन्मे बभस्ति नाभिनन्दति।
तद् दुष्वप्न्यं प्रति मुञ्चामि सपत्ने कामं स्तुत्वोदहं भिदेयम् ॥२॥
अथ॰ कां॰ ९ सू॰ २ मं॰ २ मंत्रान्तरमप्यस्ति "कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्" ऋ॰ मं॰ १॰ सू॰ १२९ मं॰ ४

यन्मइति = हे परमात्मन्! यत् मे मम मुमुक्षोः जीवस्य मनसः प्रियं नास्ति। यत् मे मम चक्षुषः नेत्रस्य तद्विषयस्य च प्रियं नास्ति। यत् यस्मात्कारणात् अयं कामः मे मम बभस्ति तिरस्कारं करोति। कश्चिदपि कामः अयं माम् नाभिनन्दति आनन्दपूर्वकं न सत्करोति। तत् कामजनितं दुष्वप्न्यं दुःस्वप्नोद्भवं दुःखं सपत्ने स्वशत्रौ कामे प्रतिमुञ्चामि प्रेषयामि। अतः एव अहं कामं स्तुत्वा स्तुतिं कृत्वा उद्भिदेयम् अस्मात् संसारात् उपरि तिष्ठामि ॥२॥ उपनि॰ "कामः संकल्पः" बृह॰ उप॰ १।५।३ अथ च "काम एव यस्यायतनम्" बृह॰ ३।९।११ यद्वा च "कामोऽकार्षीन्नाहं करोमि, कामः करोति, कामः कर्ता, कामः कारयिता" महाना॰ उप॰ १८।२

आवृतमिति = हे कौन्तेय! हे कुन्तीसुत! हे अर्जुन! ज्ञानिनः विवेकिनः ज्ञानम् आत्मतत्त्वविवेकः। अनलेन = न अलम् अनलम्। अलंभावो यस्य नास्ति सः अनलः तेन अनलेन दाहकेन दुष्पूरेण = दुःखेन पूरणम् इष्टप्रापणम् यस्य स दुष्पूरः कामवस्तुप्राप्तौ पुरुषं दुःखेन पूरयति इति दुष्पूरः, तेन दुष्पूरेण नित्यवैरिणा = (नित्यशत्रुणा) कामरूपेण काम्यते इति कामः विषयः तमेव सर्वत्र रूपयति गोचरयति इति कामरूपः, तेन एतेन कामरूपेण आवृतम् आच्छादितमिति ॥ ३९ ॥

(मू. गी.) आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९

(वेदगी.) ~~दुष्वप्न्यं काम दुरितं च काम्……~~
~~……~~ …सते ॥ ३ यद्वा
अथ. कां. ९ सू. २ मं. ३    कामो जज्ञे प्रथमो नैनं देवा आपुः पितरो न मर्त्याः
~~……~~ ततस्त्वमसि ज्यायान् विश्वहा महांस्तस्मै ते काम नम इत् कृणोमि। अथ. कां. ९ सू. २ मं. १९ तथा च मंत्रे
~~दुष्वप्न्यमिति हे काम दुष्वप्न्यं दुष्टं स्वप्नं दुरितं च पापं च अप्रजस्तां सन्तानाभावं च……~~
~~……प्रतिमुञ्च दूरीकुरु। यः कामः……~~
~~……चिकित्सात् चिकित्सां कुर्वीत……~~ ॥ ३

काम इति = (कामः आकांक्षा अर्थात् पुत्रैषणा…) (प्रथमः सृष्टेः सर्वपदार्थेभ्यः पूर्वं संसारयात्राचालनाय (जज्ञे) प्रादुरभूत्। देवाः इन्द्रादयो देवाः पितरः अर्यमादयः पितरः मर्त्याः विद्वांसः मनुष्या एनं कामं (न आपुः) न प्रापुः न स्वीकुर्वन्ति स्म। अतः देवानां देवत्वं पितॄणां पितृत्वं मनुष्याणां मनुष्यत्वं तस्थौ। अन्यथा एतत्स्वीकरणेन सर्वे देवादयः स्वस्वपदव्या अधोऽपतिष्यन्। हे काम! ततः तस्मात् कारणात् त्वं ज्यायान् कामक्रोधादिषु ज्येष्ठः असि। त्वं महान् विश्वहा जगद्विनाशकः असि। हे काम! अहं ते तस्मै कामाय इत् एव नमः नमस्कारं करोमि। अर्थात् अहं तुभ्यं दूरत एव नमस्करोमि अहं त्वां द्रष्टुमपि नेच्छामि ॥ ३ ॥ यथा च

"य एवं काममयः पुरुषः स एव वेदैव शाकल्य तस्य का देवतेति? स्त्रिय इति होवाच," बृह. ३ अध्या. ३ ब्रा. ९ श्रु. ११

इन्द्रियाणीति= इन्द्रियाणि चक्षुरादीनि मनः चित्तं बुद्धिः ज्ञानम् अस्य कामस्य क्रोधस्य वा अधिष्ठानमाश्रयः निवासस्थानम् उच्यते कथ्यते। एषः कामः क्रोधः वा एतैः इन्द्रियादिव्यापारैः ज्ञानं प्रत्यग्दृष्टिम् आवृत्य आच्छाद्य देहिनं जीवात्मानं विमोहयति अहं भोक्ता इत्यादिना विविधं भावयति ॥ ४० ॥

(मू.गी.) इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥

(वेदगी.) अयमग्निरमूमुहद् यानि चित्तानि वो हृदि।
वि वो धमत्वोकसः प्र वो धमतु सर्वतः ॥ २
अथ. कां. ३ अनु. १ सू. २ मं. २

अयमिति= हे मुमुक्षवः! वो युष्माकं हृदि मनसि बुद्धौ च यानि चित्तानि चेतनानि ज्ञानानि, ~~[illegible]~~ रूपादिविषयबोधनानि सन्ति। तानि सर्वाणि ज्ञानानि, तथा अयं कामः अग्निः क्रोधश्च अमूमुहत् मोहयति आच्छादयति इत्यर्थः। अस्य कामस्य सर्वाणि इन्द्रियाणि मनोबुद्धी च अधिष्ठानानि सन्ति। अतः सः कामः क्रोधः वो युष्मान् मुमुक्षून् ओकसः ब्रह्मतत्त्वविवेचनभवनात् विधमतु विशेषेण निःसारयति। अथ च सर्वतः सर्वस्मादपि आत्मतत्त्वविवेकस्थानात् वो युष्मान् प्रधमतु प्रकर्षेण अपगमयति ॥ २ ॥

तस्मादिति:= हे भरतर्षभ! हे भरतकुलश्रेष्ठ! अर्जुन! यस्मात् कामः क्रोधश्च तव परं शत्रुः, तस्माद्धेतोः त्वम् आदौ आरम्भे इन्द्रियाणि चक्षुरादीनि इन्द्रियाणि तद्विषयान् च, ततः मनो बुद्धिश्च नियम्य विषयग्रहणात् विमुखानि कृत्वा ज्ञानविज्ञाननाशनं ज्ञानं वस्तुतत्त्वबोधः विज्ञानं विषयव्यापृतवृत्तिजन्यम् इदमेव अहमिति, तयोः ज्ञानविज्ञानयोः नाशनं विध्वंसकं पाप्मानं पापिष्ठम् एनं कामं क्रोधञ्च प्रजहि विनाशय इति। ४१।

(मू. गी.) तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम्॥ ४१॥

(वे. गी.) अपहत रक्षसो भङ्गुरावतः स्कभायत निर्ऋतिं सेधतामतिम्।
आ नो रयिं सर्ववीरं सुनोतन देवाव्यं भरत श्लोकमद्रयः॥ ४॥
ऋ. अष्ट. ८ अध्या. ३ व. ८ मं. ४ ऋ. मं. १० सू. ७६ मं. ४

अपहतेति= हे अद्रयः! हे अदरणशीलाः!!! मुमुक्षवः पुरुषाः! यूयं भङ्गुरावतः भञ्जककर्मवतः तत्त्वज्ञानबुद्धिविरोधकान् रक्षसः कामक्रोधप्रभृतिराक्षसान् शत्रून् अपहत विनाशयत। तथा निर्ऋतिं कामक्रोधात्मिकां पापदेवतां स्कभायत= दूरे परिहरत अर्थात् कामक्रोधादिशत्रून् प्रजहीति भावः। अमतिं कामाविष्टां कुबुद्धिं सेधत= निषेधत। किञ्च अतः नः= कामक्रोधावृतमनोऽस्मभ्यं ~~अस्माकं~~ ~~निमित्ते~~ऽपि सर्ववीरं सर्वैः वरणीयं यद्वा यद्विवेकधनं प्राप्य सर्वे वीरा भवन्ति अतः बहुवीरत्वापादकं रयिं ज्ञानम् आसुनोतन आसमन्तात् ज्ञानाऽभिषवं कुरुत। तथा च देवाव्यं देवप्रीणनम् परमात्मप्रसत्तिकारकं श्लोकं स्तुतिं भरत सम्पादयत॥ ४॥

एवमितिः हे महाबाहो! हे अर्जुन! बुद्धेः बुद्ध्यादेः सर्वदृश्यादृश्यपदार्थेभ्यः परं विलक्षणं सूक्ष्मं वा आत्मानम् आत्मना स्वस्वरूपेण बुद्ध्वा ज्ञात्वा आत्मनि एव आत्मबुद्धिं दृढां कृत्वा त्वं कामाश्रयं कामाश्रयभूतम् अन्तःकरणम् आत्मना स्वस्वरूपेण संस्तभ्य संयोज्य दुरासदं दुर्जयं कामरूपं शत्रुं जहि विनाशय ॥४३॥ इति श्री सारस्वतान्वयलैयाग्रामवास्तव्य न्यायभूषणोपपदजगन्नाथशास्त्रि ओ·री·कृतायां गीतार्थबोधिन्यां तृतीयोऽध्यायः समाप्तः ॥३॥

(मू·गी·) एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो! कामरूपं दुरासदम् ॥४३॥
इति श्रीमद्भग· तृतीयोऽध्यायः समाप्तः ।

(वेदगी·) एतानि सोम पवमानो अस्मयुः सत्यानि कृण्वन् द्रविणान्यर्षसि ।
जहि शत्रुमन्तिके दूरके च य उर्वीं गव्यूतिमभयं च नस्कृधि ॥५
ऋ· अष्ट·७ अध्या·३ व·३ मं·५ ऋ·मं·९ सू·७८ मं·५

हे सोम! सौम्यगुणयुक्त शान्तात्मन् प्रभो! एतानि "गोजिन्नः सोमो रथजिद्धिरण्यजित्स्वर्जिदब्जित्पवते —" इति पूर्वोक्तमंत्रोक्तानि एतानि गो(इन्द्रियाणि) रथ(देहः) हिरण्य(मनः) इत्यादीनि द्रविणानि पदार्थाः सत्यानि "ब्रह्मैवेदं सर्वं न तद्भिन्नं किञ्चिदपि" इति सत्यस्वरूपत्वेन आत्मस्वरूपं कृण्वन् कुर्वन् अत एव पवमानः पूयमानः। अस्मयुः अहमेव परं तत्त्वमिति स्वात्मप्रत्ययान्वेषकस्त्वम् अर्षसि प्राप्नोषि। अत एव त्वं कामक्रोधात्मकं शत्रुं जहि विनाशय। यः अन्तिके समीपे दूरके अत्यन्तादूरे वर्तमानः आन्तरिकश्च कामरूपः शत्रुः वर्तते तं कामरूपं शत्रुं जहि विध्वंसय। तथा अनेन हेतुना नः अस्माकम् आत्मतत्त्वविवेकिनाम् उर्वीं विस्तीर्णां गव्यूतिम् गोलोकधामात्मकम् मुक्तिमार्गम् अभयं भयरहितं यथा स्यात्तथा कृधि कुरु। कामपरित्यागेन मुक्तिमार्गप्राप्तिः स्पष्टतया प्रतीयते ॥ ५ ॥ इति श्री सारस्वतान्वयलैयाग्रामवास्तव्य न्यायभूषणोपपदजगन्नाथशास्त्रि ओ·री· कृतायां वेदगीतार्थबोधिन्यां तृतीयोऽध्यायः समाप्तः ॥३॥

* यथोक्त "श्रोत्रस्य श्रोत्रं मनसो मनो वा यद्वाचोह वाचं स उ प्राणस्य प्राणः। चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति" केनो· खं·१ श्रु·२ "अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति" कठो· अध्या·२ वल्ली ६ श्रु·८ तथा च "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" कठो· अध्या·२ वल्ली ६ श्रु·१४ १२२

" परं कामक्रोधादिरूपं शत्रुगणं शौर्येण बलगतविवेकेन, तपसा भानुरिव तापयतीति परंतपः। शत्रुतापनः, तत्संबुद्धौ हे परन्तप!

अध्या. ४
श्लो. १, २

श्रीभगवानुवाच। इममिति = अहं कृष्णस्वरूपः परमात्मैव अव्ययं व्ययरहितम् इमं पूर्वाध्यायप्रोक्तं योगं कर्मयोगं विवस्वते सूर्याय प्रोक्तवान् कथयामास। सः विवस्वान् स्वपुत्राय मनवे प्राह अकथयत्। मनुश्च स्वपुत्राय इक्ष्वाकवे अब्रवीत् उपदिष्टवान्॥१॥ हे परन्तप! हे अर्जुन! एवं प्रोक्तविधिना परम्पराप्राप्तं विनस्वदाद्यसाधारणजनैः यथाक्रमं प्रोक्तम् इमं ज्ञानकर्मयोगं राजर्षयः जनकादयः विदुः अजानन्। एवं पूर्वकालप्रोक्तः सः योगः कर्मयोगः महता कालेन अतीवदीर्घसमयातिक्रमणेन उपदेशकजनाभावात् इह अस्मिन् लोके नष्टः सम्प्रदायविच्छित्तिं प्राप्तः॥२॥

सनकादयः ऋषयश्च

श्रीभगवानुवाच

(मू. गी.) इमं विवस्वते योगं प्रोक्तवानहमव्ययम्। विवस्वान् मनवे प्राह
मनुरिक्ष्वाकवेऽब्रवीत्॥१॥ एवं परंपराप्राप्तमिमं राजर्षयो विदुः।
स कालेनेह महता योगो नष्टः परंतप॥२॥

(वेदगी.) अहं सो अस्मि यः पुरा सुते वदामि कानिचित्।
तं मा व्यन्त्याध्यो वृको न तृष्णजं मृगं वित्तं मे अस्य रोदसी॥१
ऋ. अष्ट. १ अध्या. ७ व. २१ मं. ७ मं. १ सू. १०५ मं. ७

~~हे मुमुक्षवः! पुरा सृष्ट्यादौ वेदमिमवत्तणाय त्वज्ञानवारीत~~ "यस्य निःश्वसितं वेदः यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनः प्रातः कुरुक्षेत्रे युदर्शनम्॥१ वेदो गीता तथा गीता वेद एव न संशयः। वेदगीतापृथक्कृत्वं नो द्वयोः ब्रह्मप्रकीर्तनात्॥२॥"

अहमिति = हे मुमुक्षवः! पुरा सृष्ट्यादौ वेदमिमवत्तणाय त्वज्ञानपरिपक्वाय कानिचित् कतिपयानि ज्ञानकर्ममयानि स्तोत्राणि योऽहं परमात्मा वदामि अवदम्। स एवाहं अधुना इति शेषः, अस्मि न त्वन्यः कश्चित्। यः उपदेशः सृष्ट्यादौ दत्तः। बहुकालेऽतीते सति नष्टमेव तं योगमधुनाऽपि उपदिशामि। तं तादृशं ज्ञानकर्मयोगम् आध्यः = आधीयन्ते मनसि स्थाप्यन्ते इत्याधिः, ते यथाऽपि कारजनप्राप्त्यभावात् ज्ञानविनाशस्वरूपाः व्याधयः दुःखानि यन्ति व्ययन्ति प्राप्नुवन्। वृको न तृष्णजं मृगम् = तृष्णजं जात तृष्णां पिपासन्तमुदकं प्रति गच्छन्तं मृगं वृक अरण्यश्वा मार्गमध्य एव भक्षयति। एवं सृष्ट्यादौ मया प्रोक्तः ज्ञानकर्मयोगोऽपि महता कालवृकेण भक्षितः। हे रोदसी! हुणह्नु जरामृत्युशोकादीन् रोदसी हे जरामृत्युशोकाद्यवरोधकौ द्यावापृथिव्यौ! मे ~~मदीयम्~~ मम अस्य परमात्मनः इदं वचनं वित्तं जानीतम्। एतदेव मदुक्तं वचनं जानीहीत्यर्थः॥१॥ "तुलना = गीतायां कर्मयोगः सृष्ट्यादौ विवस्वन्मन्विक्ष्वाकुराजर्षि द्वारा आयातः द्वापरादौ अनश्यत् स एव अद्य पुनः मया प्रोच्यते" इत्युक्तम्। वेदेऽपि ईश्वर उपदिशति = अयं कर्मयोगः सृष्ट्यादौ मया ज्ञानयोगकर्मयोगप्रवर्तये कतिचिन्मार्गा अभाणि। ते एव कालवृकेण मध्ये एव भक्ष्यन्ते। मया प्रकारान्तरेण ते मार्गा कथ्यन्ते बोध्यन्ते च।

स इति-यः योगः पुरा विवस्वते प्रोक्तः। स एव अयं योगः ज्ञानकर्मयोगः मया अद्य ते कर्तव्याकर्तव्ययोः मुह्यमानाय ते तुभ्यं प्रोक्तः कथितः। त्वं मे भक्तः असि, मदीयः भक्तः असि। अथ-च सखा स्नेहसम्पन्नः सुहृदसि। एतत् उत्तमम् सर्वोत्तमं ब्रह्मज्ञानप्राप्तिसाधनमत एव रहस्यम् गोपनीयमेवाऽस्ति। ३॥

(मू. गी.) स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम्॥ ३॥

(वेद गी.) अयं पन्था अनुवित्तः पुराणो यतो देवा उदजायन्त विश्वे।
अतश्चिदा जनिषीष्ट प्रवृद्धो मा मातरममुया पत्तवे कः॥ १॥
ऋ. अष्ट. ३ अध्या. ५ व. २५ मं. १ मंड. ४ सू. १८ मं. १।

अयमिति-हे मुमुक्षो! जीवात्मन्! अयं पन्थाः = प्रत्यक्षेणोपलभ्यमानः ज्ञानकर्मयोगमार्गः पुराणः सनातनः सृष्ट्यादौ विवस्वत्प्रभृतये अनुवित्तः आनुपूर्व्येण सर्वैः जायमानैः लब्धः। यतः विवस्वन्मन्विक्ष्वाकुप्रभृतिभ्यः विश्वे सर्वे देवाः विद्वांसः मुमुक्षवः उदजायन्त उत्कृष्टा भवन्ति, मुक्त्यधिकारिणः जायन्ते इति भावः। अतः चित् = अस्मादेव ज्ञानकर्मयोगमार्गात् प्रवृद्धः प्रकर्षेण वृद्धिं गतः आजनिषीष्ट आसमन्तात् जायताम्। अमुया अमुम् मातरं ज्ञानकर्मप्रमापकं जीवात्मानं पत्तवे विनाशाय मा कः = मा करोतु॥ १॥ तुलना-गीतायां सृष्ट्यादौ प्रोक्तकर्मयोगमहत्वप्राचीनत्वे कथिते, वेदेऽपि-च अयं कर्मयोगपन्था पुराणः कथितः। एतदाधारतः विद्वांसः मुक्तिमार्गे प्रावर्तन्त। अहर्निशमुन्नतिं प्राप्य मुक्त्यधिकारिणः सञ्जाताः। कश्चिदपि ना एतत्कर्मयोगान्न पतेत्॥

अपरमिति = भवतः कृष्णरूपस्य तव जन्म अपरम् अर्वाचीनम्। विवस्वतः तु जन्म उत्पत्तिः परं प्राचीनं सृष्ट्यादौ एव। एवम् उभयोः जन्मनि महति भेदे सति त्वम् आदौ विवस्वते इमं योगं प्रोक्तवान् इत्येतत्सत्यमिति कथं केन प्रकारेण विजानीयाम् अथवाऽन्यो वा विजानीयात्॥४॥

अर्जुन उवाच

(मू. गी.) अपरं भवतो जन्म परं जन्म विवस्वतः।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति॥४॥

(वेदगी.) कथा तं एतद् हमा चिकेत गृत्सस्य पाकस्तवसो मनीषाम्।
त्वं नो विद्वाँ ऋतुथा वि वोचो यमर्धं ते मघवन् क्षेम्या धूः॥५

ऋ. अष्ट. ८ अध्या. ८ व. २० मं. ५ मंड. १. सू. २० मं. ५

कथेति = हे मघवन् = मघः पूजा साऽस्ति अस्मिन्निति मघवान् पूजावान् तत्सम्बुद्धौ हे मघवन्! हे पूजावन्! हे सर्वधनेश्वर! वा। विद्वान् सर्वज्ञः त्वं ऋतुथा पुरा यथासमयं नोऽस्मान् मुमुक्षून् विवोचः उपदिष्टवान् इति [~~...~~] पाकः पक्वप्रज्ञोऽहं ते तव ईदृशं (एतत्) त्वदीयं एतद्वचनं ~~सामर्थ्यं~~ कथा केन प्रकारेण आचिकेतम् आ समन्तात् जानामि। गृत्सस्य मेधाविनः तवसः वृद्धस्य पुरातनस्येति भावः। तव मनीषां स्तुतिबुद्धिं कथम् आचिकेतम् जानामि। त्वं तु सम्प्रति मम संमुखे उपस्थितोऽसि। पुरा कथमुपदिष्टवानिति भावः। अतः ते तव अर्धं यं ~~...~~ स्तुत्या अवयमै एव करोमि। सा स्तुतिः क्षेम्या क्षेमे भवा क्लेशरहिता वोढुम् शक्या धूः भारः अस्ति। यस्मात् स्तुतिभागमपि अहम् अक्लेशेन कर्तुं न शक्नोमि मन्दबुद्धित्वात्। तस्मात् त्वम् स्वयमेव मह्यं स्वसामर्थ्यं वक्तुमर्हसि॥५ ॥

५ तुलना = गीतायाम् अर्जुनः श्रीकृष्णम् पृच्छते अपरं भवतः जन्म परं जन्म विवस्वतः। भवान् तं ~~...~~ कथमुपादिशत्। अयं संशयः अर्जुनेन उपस्थापितः। वेदेऽपि च जीवात्मा परमात्मानं पृच्छति यत् सृष्ट्यादौ भवता वेदेन कर्मयोगः उपदिष्टः एतत् वयं कथं विजानीमहे



जन्मादत्त ,,

श्रीभगवानुवाच

बहूनीति = हे अर्जुन! मे मम अनन्तशक्तेः परमेश्वरस्य देवतिर्यङ्मनुष्येषु तव च बहूनि जन्मानि व्यतीतानि अतिक्रान्तानि बहूनि बहुसंख्याकानि सन्ति। तानि तव अन्येषां च स्वस्य च जन्मानि अहं वेद जानामि। हे परन्तप! हे अर्जुन! त्वं तु तानि जन्मानि न वेत्थ न जानासि ॥ ५ ॥

श्रीभगवान् उवाच

(मू. गी.) बहूनि मे व्यतीतानि जन्मानि तव चार्जुन!।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥

(वेदगी.) उदग्रभं परिपाणाद् यातुधानं किमीदिनम्।
तेनाहं सर्वं पश्याम्युत शूद्रमुतार्यम् ॥ ८ ॥
अथ. कां. ४ अनु. ४ सू. २ मं. ८ यद्वा "नकिरेषां जनूंषि वेद ते अङ्ग! विद्रे मिथः जनित्रम्" ऋ. मं. ७ सू. ५६ मं. २ यद्वा "रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय।

इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश" ऋ. मं. ६ सू. ४७ मं. १८

उदग्रभमिति = परिपाणाद् जगतः परिरक्षणात् हेतोः किमीदिनम् = किम् इदानीं भक्षयेयम्, किम् इदानीं भक्षयेयम्" इति चरन्तं यातुधानम् = राक्षसम् जातावेकवचनम्। राक्षसान् इत्यर्थः। उद् अग्रभम् प्रतिनिगृहीतवान् अस्मि वशीकृतवान् अस्मीत्यर्थः। तेन जगत्परिरक्षणेन हेतुना अहं परमात्मा सर्वं प्रत्नसमये राक्षसहननिमित्ते प्रादुर्भूतं स्वकीयं जन्म पश्यामि अवलोकयामि जानामीत्यर्थः। उत अपि शूद्रम् उत आर्यम्। शुचा द्रवतीति शूद्रः नीचः तं शूद्रं नीचजन्मानि आर्यम् सज्जनजन्मानि अहं पश्यामि न तु ते स्वयं पश्यन्तीति ॥ ८ ॥ इति निश्चये ~~अहं हे अङ्ग~~ मम परमात्मनः जनूंषि अवतारात्मकानि जन्मानि नकिः न कश्चिदपि वेद जानाति। तेषां तव जीवात्मनां मिथः परस्परम् अन्योऽन्ये वा जनित्रम् जन्म न विद्रे जानन्तीति ॥ २ ॥

जनूंषि वेद = अहं जानामि। परन्तु यद्वा रूपं जीवात्मनां हि निश्चयेन एषां जीवात्मनां मध्ये

अथर्वशिर उप. श्रु. ६ "ओं अस्मिन्निदं सर्वमोतप्रोतं यस्मादन्यन्न परं किञ्चनास्ति न तस्मात्पूर्वं तदस्ति न भूतं नोत भव्यं यदासीत्"
अथर्वशिर उप. श्रु. १ "अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः" तुलना = गीतायां भगवान् स्वजन्मान्याह १६
अहं जन्मानि वेद, न त्वं अल्पज्ञत्वात्। वेदेऽपि च परमात्मा स्वस्वरूपं स्वावतारजन्मानि च वेद। ~~जीवा~~ जीवा अल्पज्ञत्वात् स्वजन्मानि परजन्मानि च न विदुः" इत्युक्तम् ॥

अज इति = अजः न जायते इत्यजः "न तस्य कश्चिज्जनिता न चाऽधिपः" इत्युक्तेः जन्मरहितोऽपि सन् अव्ययात्मा अव्ययः नाशनक्रियायाः अविषयः आत्मा स्वभावो यस्य सोऽव्ययात्मा नित्यः "अजो नित्यः" इत्युक्तेः नित्यः सन् भूतानाम् ब्रह्मादीनाम् अन्येषां च भूतानाम् अहम् एव ईश्वरो नियन्ताऽपि सन् निर्विकार एव परमात्मा प्रकृतिम् = कृतिः सृष्ट्यादिक्रिया यस्याः प्रभावात् मम सा प्रकृतिः त्रिगुणात्मिका दैवी माया तां स्वां स्वकीयां प्रकृतिम् अव्यक्तसंज्ञिकाम् मूलप्रकृतिम् अधिष्ठाय आश्रयं कृत्वा यद्वा संप्रधर्ष्य "प्रकृतिः स्वात्मप्रा तया जीवात्मानं प्रधर्षयति। अहं तु प्रकृतिं प्रधर्षयामि अतः अधिष्ठाय इत्युक्तम्। अतः अजत्वादिलक्षणः "अकर्मत्वेन जगद्विलक्षणः आत्ममायया आत्मशक्त्या, मायायाः परमात्मनश्च अभेदोऽस्ति। यथा वह्नेः स्वदहनशक्त्या श्चाभेदोऽस्ति तद्वदहं संभवामि जगति मनुष्यरूपेण भिन्नरूपेण वा प्रादुर्भवामीतिभावः ॥ ६ ॥

(मू॰ गी॰) अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥

(वेदगी॰) अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः।
अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यता मा ॥ १ ॥

ऋ॰ मं॰ ४ सू॰ २६ मं॰ १
ऋ॰ अष्ट॰ ३ अध्या॰ ६ व॰ १५ मं॰ १ यद्वा "उतामृतासुर्व्रत एमि कृण्वन्नसुरात्मा तन्वस्तत्सुमद्गुः"॥ अथ॰ कां॰ ५ सू॰ १ मं॰ ७

अहमिति = अहं परमात्मा मनुः सृष्ट्यादौ धर्मशास्त्रराज्यमर्यादादिसंचालकत्वेन मनुः अंशावतारः अभवम्। तथा सूर्यः सर्वस्य प्रेरकः सविता विवस्वान् कर्मिणां नोपदेष्टाऽहम् अभवम्। ~~विप्रः मेधावी कक्षीवान् = कक्ष्या रज्जुः कक्ष्या जगत्संचालनरूपा रज्जुः~~ ऋषिः सर्वव्यापकः सर्वद्रष्टाऽपि अहं विप्रः मेधावी कक्षीवान् = कक्ष्या रज्जुः = कक्ष्या जगत्संचालनरूपा रज्जुः अस्य अस्तीति कक्षीवान् जगत्संचालनसमर्थः अस्मि। अहमेव आर्जुनेयम् आर्जुन्याः उषसः पुत्रं कुत्सं दिवं न्यृञ्जे नितरां प्रसाधयामि स्वायत्तीकरोमि। अहं विशाधिपतिरहमेवाऽस्मि। अहं कविः = क्रान्तदर्शी यद्वा "कवतेः धातोः गत्यर्थस्य कविः = कवयति गच्छति असौ नित्यम्। अतः सर्वत्र गमनशीलोऽपि अहमेव अस्मि। अत एव उशना = वश कान्तौ कनसि प्रत्ययः। शोभायमानः अस्मि। हे जनाः! मां सर्वोत्तमं सर्वगतं बहुवारम् आगतम् मा मां पश्यत अवलोकयत अनुभवत इतिभावः ॥ १ ॥ उतेति = अमृतासुः अमरप्राणः अजः अहं व्रतः दिव्यकर्ममयः सन् कर्माणि कृण्वन् एमि संसारे प्राप्नोमि। तत तेन आत्मा, असुः प्राणः तन्वः, शरीरं सुमद्गुः शोभनः दिव्यगुणवन्तः भवन्ति ॥

तुलना = गीतायाम् आत्मा परमात्मा च अजः अव्ययः प्रकृत्यधिष्ठाता सन् स्वदिव्यशक्त्या ("स्वशक्त्या") स्वदिव्यजन्म गृह्णाति यत् कर्माधीनं न भवतीत्युक्तम्। वेदे च अजः अव्ययः परमात्मा भवन्नपि दिव्यशरीरग्रहणेन प्राकट्यं भवति। परं च स्वशक्त्या न च कर्मशक्त्या जन्मादत्ते ॥ ११८

पदेक्ष = यदा यदा यस्मिन् समये २ धर्मस्य वेदविहितसद्धर्मस्य ग्लानिः विघ्नोत्पादकैः रक्षोभूतैर्जनैः अत्यन्तविनाशः भवति। हे भरत! हे अर्जुन! अधर्मस्य सर्वानर्थहेतोः पापस्य अभ्युत्थानमुदयः भवति, तदा तस्मिन् काले आत्मानं धर्माधर्मानुग्रहनिग्रहयोग्यं देहम् अहं सर्वनियन्ता ईश्वरः सृजामि रचयामि ॥८॥

(मू. गी.) यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥८॥

(वेद गी.) ऋधङ्क् मन्त्रो योनिं य आबभूवामृतासुर्वर्धमानः सुजन्मा।
अदब्धासुर्भ्राजमानोऽहेव त्रितो धर्ता दाधार त्रीणि ॥१॥
अथ. कां. ५ अनु. १ सू. १ मं. १ (यद्वा)

~~अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तः समुद्रे।
ततो वितिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि~~ ॥८॥
ऋ. अष्ट. ८ अध्या. ८ व. १२ मं. ८

ऋधङ्क् इति = ऋधक् इति अव्ययम्। ऋधक् सत्यम्। मंत्रः गुप्तभाषणम्। यः अमृतासुः अमरणधर्मप्राणः नित्यजीवी सुजन्मा सु दिव्यं जन्म यस्य स सुजन्मा, वर्धमानः वृंहणशीलः अस्ति। स एव धर्मपरिरक्षणाय, योनिं विभक्तिव्यत्ययः, योनौ जन्मनि आबभूव आसमन्तात् सर्वथा इत्यर्थः भवति। स एव अदब्धासुः = अदब्धाः रोगादिभिः अहिंसिताः असवः प्राणाः यस्य सः अदब्धासुः। अहा इव = दिवा इव भ्राजमानः शोभमानः। त्रितः = त्रित्वं ब्रह्मविष्णुमहादेवत्वे तेन त्रिसंख्यया युक्तः त्रितः। धर्ता पृथिव्यादिपदार्थधारकः त्रीणि भूर्भुवः स्वर्लोकान् दाधार धारयति ॥१॥ यद्वा। त्रिभिः सत्वरजस्तमोगुणैः सत्वरजस्तमोगुणैः इति। त्रिभिः ब्रह्मविष्णुमहेशैः इतः युक्तः।

* अहं ~~परमात्मा~~ पितरमाकाशं "द्यौः पिता" इति श्रुतेः सुवे जनयामि। ~~अस्य भूलोकस्य मूर्धन् मूर्धनि = उपरि मम~~ (अस्य भूलोकस्य मूर्धन् मूर्धनि उपरि) तथा च समुद्रे ~~समुद्रवन्ति अस्मात् भूतजातानि इति समुद्रः परमात्मा तस्मिन् परमात्मनि~~ अप्सु आपनशीलासु जीवात्मसु अन्तः ~~मध्ये यद्ब्रह्म चैतन्यं तत्~~ मम योनिः ~~कारणम्~~। यतः इदृग्भूतोऽहं परमात्मा विश्वा विश्वानि सर्वाणि भुवना भुवनानि भूतजातानि ~~अनु~~ अनुप्रविश्य वितिष्ठे विविधं व्याप्य तिष्ठामि। अतः अपि च अमूं द्यां विप्रकृष्टदेशेऽवस्थितं स्वर्गादिसर्वं ~~लोकं विप्रकृष्टं वर्ष्मणा स्वकीयेन~~ स्वकीयेन महता कायेन उपस्पृशामि स्पर्शं करोमि। वितिष्ठे = समवप्रविभ्यः स्थः, इत्यात्मनेपदम् ॥८॥ ११८

तुलना = गीतायां धर्मह्रासाय धर्मवृद्धि काले परमात्मा संसारे स्वयं प्रकटीभवतीति इत्युक्तम्। वेदे ऋक्मन्त्रे अजन्मा अदब्धासुः मन्त्रोक्तो धर्ता धर्मस्य प्रजन्मा तेनैव समागच्छति।

जन्मेति = हे अर्जुन! यः मे मम दिव्यं "स्वयमेव स्वदीप्त्या दीव्यति प्रकाशते इति दिव्यम् अलौकिकं प्रकाशमयं यद्वा दिवः ब्रह्मणः स्वरूपं दिव्यम् अप्राकृतम् जन्म, दिव्यम् अप्राकृतं कर्म यद्वा लोकोत्तरं कर्म तत्वतः अध्यात्मदृष्ट्या वेत्ति विजानाति। सः इमं प्राकृतं देहं शरीरं त्यक्त्वा पुनः जन्म पुनरुत्पत्तिः नैति न भूयः जायते किन्तु मां परब्रह्मस्वरूपम् एति प्राप्नोति ॥ ९ ॥

(मू॰ गी॰) जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥

(वेद गी॰) दिव्यो गन्धर्वो भुवनस्य यस्पतिरेक एव नमस्यो विक्ष्वीड्यः।
तं त्वा यौमि ब्रह्मणा दिव्य देव नमस्ते अस्तु दिवि ते सधस्थम् ॥ १ ॥
~~अथ॰ कां॰ २ अनु॰ १ सू॰ २ मं॰ १~~ (यद्वा)
आ यो धर्माणि प्रथमः ससाद ततो वपूंषि कृणुषे पुरूणि।
धास्युर्योनिं प्रथम आविवेशा यो वाचमनुदितां चिकेत ॥ २ ॥
अथ॰ कां॰ ५ अनु॰ १ सू॰ १ मं॰ २।

दिव्य इति = यः दिव्यः स्वयमेव स्वदीप्त्या दीव्यति प्रकाशते इति दिव्यः। अलौकिकप्रकाशमयः ब्रह्मस्वरूपः। गन्धर्वः = गां वेदवाणीं धारयतीति गन्धर्वः वेदधर्ता। भुवनस्य पृथिव्यादिलोकस्य पतिः पालकः। विक्षु मनुष्येषु ईड्यः स्तुतियोग्यः एक एव नमस्यः नमस्कारार्हः। एवंविधं तं त्वां दिव्यरूपं ब्रह्मणा स्तुतिमंत्रेण यौमि संयोजयामि। हे दिव्य! हे प्रकाशस्वरूप! अप्राकृतिक! हे देव! द्योतनादिगुणविशिष्ट! ते तुभ्यं नमः अस्तु। ते तव सधस्थम् आवासस्थानं दिवि = ज्ञानेन प्रकाशमये हृदयाकाशेऽस्ति। सधस्थम् सह तिष्ठत्यत्र "घञर्थे कविधानम्" स्थास्नापाव्यधिहनियुध्यर्थम् " इत्यधिकरणे कप्रत्ययः। "सधमादस्थयोश्छन्दसि" इति सहस्य सधादेशः। यद्वा
आ य इति = यो दिव्यदेहः दिव्यकर्मा प्रथमः अनादिः सन् धर्माणि दिव्यत्वेन शास्त्रविहितकर्माण्यनुष्ठानजन्यानि सांसारिककर्माणि आससाद प्राप्नोति। ततः दिव्यजन्मकर्मधारणानन्तरं पुरूणि वपूंषि बहून् देहान् कृणुषे करोषि धारयसीत्यर्थः। प्रथमः अनादिः पुरातनः धास्युः जगत्पोषणेच्छुकः एक परमात्मा कोऽपि कारणेन हेतोः तत्र तत्र भूतेषु वर्तमानोऽपि सन् योनिं दिव्यं जन्म आविवेश [illegible]। यः अनुदितां केनाऽप्यनुक्तां स्वतः सिद्धामिति भावः वाचं [illegible] आचिकेत = ज्ञा[illegible] धास्युः = धाः धारणं पोषणं जगत इच्छतीति धास्युः "छन्दसि परेच्छायामपि" इति क्यचि "क्याच्छन्दसि" इति उ प्रत्ययः। २ ॥ गीतायां परमात्मनः दिव्यजन्म दिव्यकर्म देहे मानुषी देहात् भिन्नं जानन् मुक्तिं लभते इत्युक्तं १२० वेदेऽपि च अनादिः परमात्मा लीलायै सांसारिक धर्मान् स्वीकरोति अतः नानायोनौ प्रकटीभवन् दिव्यकर्मभिः दिव्यजन्म गृह्णाति सर्वेतत्वात् वेदोपदेशे ज्ञानं प्रदर्शयति ॥

वीतरागेति = उपकारिषु सुखु रागः, सिंहाद्युपद्रवकारिभ्यः शत्रुभ्यः भयम् । अनिष्टकर्तृषु क्रोधः, सदसद्विवेकं प्राप्य वीताः विशिष्य निर्गताः रागभयक्रोधाः येषां, ते वीतरागभयक्रोधाः । ज्ञानतपसा ज्ञानम् आत्मतत्त्वविवेक एव तपः " मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः ,, इति स्मरणात् तेन ज्ञानतपसा पूताः शुद्धाः सन्तः बहवः मुमुक्षवः माम् कृष्णस्वरूपं परं ब्रह्मैव उपाश्रिताः " सर्वं ब्रह्मैवेति विहरन्तः सर्वत्र प्रत्यग् दृष्ट्या पश्यन्तः सन्तः । मन्मयाः मदात्मना पूर्णं भवन्तः मद्भावं देहपरित्यागानन्तरं विदेहमुक्तिं प्राप्ताः ॥ १० ॥

(मू. गी.) वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥

(वेदगी.) त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः ।
स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाऽ
भियोधीः ॥ ऋ. अष्ट. ८ अध्या. ६ व. १ मं. ३ साम. उत्तरा. ६ प्र. ३ अर्ध मं. ३
ऋ. मं. ३ (?) सू. १२० मं. ३ अथ. कां. ५ सू. २ मं. ३ यजु. कां. २ सू. १०८ मं. ६ ऐ. आ. ६ १२ तै. सं. ३, ५, ५, ८, १
त्वे = त्वयि परमात्मनि

त्वे इति = विश्वे सर्वे वीतरागभयक्रोधाः जनाः त्वे क्रतुम् यथाविधिविहितं कर्म अपि वृञ्जन्ति समापुवन्ति समर्पयन्तीत्यर्थः । वृञ्जन्ति समापयन्ति । तथा च ब्राह्मणम् " त्वयि इमानि सर्वाणि भूतानि मनांसि सर्वे क्रतवोऽपि वृञ्जन्ति ,, यत् यस्मात् कारणात् एते ऊमाः तर्पकाः ज्ञानतपसा तृप्तिकारकाः जनाः केवलं वीतरागेण स्वशरीरेण भगवदुपासकाः सन्तः, द्विः वीतरागभयत्वेन द्विर्भूत्वा त्रिः वीतरागभयक्रोधत्वेन त्रिर्भूत्वा भवन्ति = भवन्तमुपाश्रिताः सन्तः एते मुमुक्षवः पूताः भवन्ति । अतः हे जीवात्मन् ! त्वं स्वादोः स्वादीयः = प्रियात् प्रियतरम् आत्मानं स्वादुना परमप्रियेण परमात्मना संसृज संयोजय । अदः ज्ञानतपसा पूतम् आत्मानं मधु मधुरं सु मधुना मधुरतरेण परमात्मना अभियोधीः अभियोधय अभितः क्रीड धातूनाम् अनेकार्थत्वात् युध्यतिरत्र क्रीडार्थे वर्तते । त्वे = " सुपां सुलुगिति ,, सप्तम्येकवचनस्य शे आदेशः " त्वे इति सिद्धम् " २ यथा ब्राह्मणग्रन्थे उक्तम् " त्वयि इमानि सर्वाणि भूतानि मनांसि सर्वे क्रतवोऽपि वृञ्जन्ति ,, "
तुलना = गीतायां रागभयक्रोधराहित्यम् , भगवच्छरणम् , भगवद्भाक्तिलयः , ज्ञानतपसा पावित्र्यम् ,, एतानि मुक्तिद्वाराणि सन्ति ।
वेदेऽपि रागभयक्रोधराहित्यं, सर्वकर्मणां भगवदर्पणम् आत्मज्ञानसाधनमस्ति ।

ये इति = ये जनाः यथा येन प्रकारेण व्यक्ताव्यक्तस्वरूपोपासनाप्रकारेण ज्ञानकर्मयोगप्रकारेण वा मां परमात्मानं प्रपद्यन्ते उपासते। अहं सर्वद्रष्टा सर्वसाक्षी सन् तान् तत्तत्साधननिष्ठान् तान् भक्तान् तथैव तदभिप्रायानुकूलेन तत्तद्रूपेणैव प्रत्यक्षीभूय भजामि अनुगृह्णामि। हे पार्थ! हे अर्जुन! मनुष्याः ब्राह्मणादयः मुमुक्षवः ते सर्वे मम परमेश्वरस्य वर्त्म कर्ममार्गम् एव अनुवर्तन्ते विशेषतया कर्म एव कुर्वन्तीति भावः ॥११॥

(मू. गी.) ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥११॥

(वेदगी.) मनीषिणः प्रभरध्वं मनीषां यथायथा मतयः सन्ति नृणाम्।
इन्द्रं सत्यैरेरयामा कृतेभिः स हि वीरो गिर्वणस्युर्विदानः ॥१५
ऋ. अ८. ८ अध्या. ६ व. १० मं. १ ऋ. मं. १० सू. १११ मं. १

मनीषिण इति = हे मनीषिणः मनसः ईषा, मनीषा, साऽस्यास्तीति मनीषी, ते मनीषिणः, तत्संबुद्धौ हे मनीषिणः!!! हे मुमुक्षवः!!! नृणां कर्मनेतॄणां सर्वेषां मनुष्याणां यथायथा = येन येन प्रकारेण (ज्ञानप्रकारेण कर्मप्रकारेण वा) मतयः = परमात्मपूजने बुद्धयः सन्ति। तथा तेन तेन प्रकारेण व्यक्ताव्यक्तरूपयोर्मध्ये व्यक्तरूपेण अव्यक्तरूपेण वा, यद्वा ज्ञानयोगप्रकारेण, कर्मयोगप्रकारेण वा मनीषां परमात्मपूजनबुद्धिं प्रभरध्वम् प्रहरध्वम् = कुरुत। यद्बुद्ध्या भवन्तः परमेश्वरं पूजयिष्यन्ति, तत्स्वरूपेण परमात्मा युष्मभ्यं तत्तत्फलं प्रदास्यतीत्यर्थः। हे मुमुक्षवः!!! वयं कृतेभिः कृतैः सत्यैः यथार्थस्वरूपभूतैः परमात्मार्चनैः इन्द्रम् ऐश्वर्यवन्तम् परमेश्वरम् एरयाम = आसमन्तात् ईरयाम प्राप्नुमः। हि यस्मात् कारणात् सः परमेश्वरः वीरः वरणीयः सर्वेभ्यो बलवत्तरो वा विदानः जानानः सर्वज्ञ इत्यर्थः। गिर्वणस्युः = गीर्भिः वनन्ति संभजन्ते इति गिर्वणसः स्तोतारः वनतेः असुन् रूपम् उपपदस्य दीर्घोऽभावश्छान्दसः। तदन्तात् काम्ये "क्याच्छन्दसि" इत्युप्रत्ययः। गिर्वणस्युः स्तोतॄन् स्वसेनिधौ कामयमानः विराजते इति शेषः अतः ते स्तुत ॥ १ ॥ ऊलनो = गीतायां ये श्लोकाः यथा मां भजन्ते अहं तान् तथैव भजामि इत्युक्तम्। वेदेऽपि च मनुष्याः यथामतयः मां प्रपद्यन्ते, मनुष्याः सत्कर्मणा सुमनसा परमात्मानं सेवेत। स च वरेण्यः सर्वज्ञः अस्तीत्युक्तम्।

काङ्क्षन्त इति = इह अस्मिन् जगति देवताः अग्न्यादिदेवान् हविर्द्वारा यजन्तः आराधयन्तः विद्वांसः कर्मणां श्रद्धया भक्त्या च कृतानां वेदविहितयज्ञाऽनुष्ठानजन्यां सिद्धिम् अन्तःकरणशुद्धिलक्षणां कांक्षन्तोऽभिलषन्तः मम वर्त्म अनुवर्तन्ते इति पूर्वेण अन्वयः। हि यस्मात् कारणात् मानुषे लोके कर्मभूमौ कर्मजा वैदिककर्माऽनुष्ठानेन उत्पन्ना सिद्धिः अन्तःकरणशुद्धिस्वरूपा सिद्धिः क्षिप्रं शीघ्रम् एव भवति ॥ १२

(मू. गी.) कांक्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥१२॥
(वेदगी.) ते विन्दन् मनसा दीध्याना यजुः स्कन्नं प्रथमं देवयानम्।
धातुर्द्युतानात् सवितुश्च विष्णोरा सूर्यादभरन् घर्ममेते ॥३॥
ऋ. अष्ट. ८ अध्या. ८ व. २९ मं. ३ ऋ. मं. १० सू. १८१ मं. ३

ते इति = ते अन्तःकरणशुद्धौ यज्ञाऽनुष्ठातारः दीध्यानाः कर्मसिद्ध्याकांक्षया दीप्यमानाः सन्तः, स्कन्नं स्कन्दनीयम् आसेचनीयं कर्मानुष्ठानसाधनं प्रथमं मुख्यं देवयानं देवानामाराधनया यानं प्राप्तिसाधनं यजुः = यजुर्वेदमंत्र द्वारा यागसाधनं घर्मं प्रवर्ग्यम् आज्यं हविः मनसा मनसे चतुर्थीस्थाने तृतीयाविभक्तिव्यत्ययः। अन्तःकरणशुद्धौ अविन्दन् अलभन्त। एते कर्मणां सिद्धिं कांक्षन्तः मम वर्त्मानुवर्तमानाः ऋत्विजः द्युतानात् = द्योतमानात् धातुः जगद्धारकात् जगत्पालकात् वा सवितुः जगदुत्पादकात् विष्णोः जगति व्यापनशीलात् सूर्यात् = सूर्यः सरति गच्छतीति सूर्यः। यद्वा सुवति प्रेरयति तत्तद्व्यापारेषु कृत्स्नं जगत् इति सूर्यः तस्मात् सूर्यात् परमेश्वरात् सूर्यदेवात् वा घर्म = यागसाधनं कर्मजन्यसिद्धिकारकम् आज्यम् आभरन् आहरन् गृहीतवन्त इतिभावः। ३ ॥ तुलना = गीतायां कर्मसिद्धिं कांक्षन्तः पुरुषाः संसारे लौकिकवैदिककर्माणि विधाय तत्फलानि च भुञ्जते इत्युक्तम्। वेदेऽपि च मनसा यज्ञं कुर्वन्तः सर्वव्यापकपरमात्मनः तत्कृतयज्ञफलं लभन्ते इत्युक्तम्

गुणानां सत्वादीनां कर्मणां शमादीनां विभागेन चातुर्वर्ण्यं चत्वारः वर्णाः ब्राह्मणक्षत्रियवैश्यशूद्राः
चातुर्वर्ण्यमिति = गुणकर्मविभागशः गुणानां सत्वादीनां कर्मणां शमादीनां विभागेन चातुर्वर्ण्यं चत्वारः वर्णाः ब्राह्मणक्षत्रियवैश्यशूद्राः एव चातुर्वर्ण्यं वर्णानां भावः चातुर्वर्ण्यं चातुराश्रम्यञ्चेति शेषः। मया परमात्मना सृष्टं सर्गादौ निर्मितम्। तस्य चातुर्वर्ण्यस्य कर्तारं स्वस्य कर्मभिः निर्मातारं मां विद्धि जानीहि। त्वं मां तु अकर्तारं कर्तृत्वादिधर्मशून्यं विद्धि जानीहि। अर्थात् जीवकर्मसंभूतो तत्फलजन्माद्य सम्भवात् अव्ययं नाशरहितं नित्यशुद्धबुद्धमुक्तस्वभावं विजानीहि ॥ १३ ॥

(मू. गी.) चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥

(वेद गी.) ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ यजुः ३१।११
ऋ. अष्ट. ८ अध्या. ४ व. १९ मं. १२ यद्वा अथ. कां. १९ अनु. १ सू. ६ मं. ६
ऋ. मं. १० सू. ९० मं. १२

ब्राह्मण इति = अस्य विराट्रूपपरमात्मनः ब्राह्मणः ब्राह्मणवर्णः मुखम् आसीत्। ब्राह्मजातिविशिष्टः पुरुषः अस्य मुखात् उत्पन्न इत्यर्थः। योऽयं राजन्यः क्षत्रियजातिविशिष्टः, स तस्य विराडात्मनः परमात्मनः बाहू कृतः बाहुत्वेन निष्पादितः बाहुभ्यामुत्पादित इत्यर्थः। तत् तदानीम् अस्य प्रजापतेः यत् यौ ऊरू तद्रूपो वैश्यः उत्पन्नः। वैश्य ऊरुभ्यामुत्पन्न इत्यर्थः। पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिविशिष्टः पुरुषः अजायत उत्पन्नः। इत्थञ्च मुखादिभ्यो ब्राह्मणादीनाम् उत्पत्तिम् तैत्तरीयाः समामनन्ति। "स मुखतस्त्रिवृतं निरमिमीत राजन्यो मनुष्याणाम् इति, मध्यतः सप्तदशं निरमिमीत वैश्यो मनुष्याणाम् इति तत्र अन्नधाना ह्यसृज्यन्त एकविंशं निरमिमीत शूद्रो मनुष्याणाम् इति,, तै. सं. ७।१।१।५ ॥ तुलना = गीतायां चत्वारः वर्णाः स्वस्वपूर्वजन्मानुसारिभिः गुणकर्मभिः सृष्टाः न च विना गुणकर्माणि तेषां जन्म करोमीत्युक्तम्। वेदेऽपि च ब्राह्मणादयः चत्वारः वर्णाः स्वस्वपूर्वजन्मानुसारिभिः गुणकर्मभिः उत्तममध्यमाधमा उक्ता इत्युक्तम्।

न मामिति = मे दिव्यदेहस्य दिव्यकर्मणः मम कर्मफलस्पृहा कर्मसु तेभ्यः उत्पन्नेषु फलेषु च स्पृहा इच्छा नास्ति। अत एव कर्माणि लोकसंग्रह निमित्ते कृतानि कर्माणि मां शुद्धस्वरूपं न लिम्पन्ति न स्पृशन्ति। यः मुमुक्षुः मां कर्मफलनिःस्पृहम् असंगं परमात्मानम् अभिजानाति सम्यगाभिमुख्येन अयमेवाहमस्मीति साक्षात्स्वात्मना वेत्ति सः विद्वान् लोकसंग्रहार्थं कृतैः कर्मभिः न बध्यते कृतकर्मजन्यफलैः देहं भूयः न लभते इतिभावः १४

(मू. गी.) न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥१४॥

(वेदगी.) कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥ यजुः ४०.२

कुर्वन्निति = निःस्पृहस्यापि योगिनः ज्ञाननिमित्ते कर्मणि अधिकार इति सूच्यतेऽनेन मंत्रेण। इह संसारे कर्माणि लोकसंग्रहार्थं मुक्तिहेतुकानि वैदिककर्माणि कुर्वन् एव शतं समाः शतवर्षपर्यन्तं यावदायुःपर्यवसानं वा जिजीविषेत् पथ्यहितमितिभक्षणेन जीवितुम् इच्छेत्। एवम् कर्मफलेनिःस्पृहताचरणप्रकारेण त्वयि नरे तव मनुष्यस्य "त्वयि नरे" इत्यत्र षष्ठीस्थाने विभक्तिव्यत्ययेन सप्तमी। मुक्तिरस्तीति शेषः। इतः अस्मात् प्रकारात् अन्यथा अन्यप्रकारेण तव मुक्तिर्नास्ति एतदुक्तं भवति। यथा स्वर्गप्राप्तौ नानाभूताः प्रकाराः सन्ति न तथा मुक्तौ इत्यर्थः। ननु कर्मणः फलेन भवितव्यम् अथ कथं मुक्तिप्राप्तिरित्यतः आह। न कर्म लिप्यते नरे = नहि मुक्त्यर्थं क्रियमाणं कर्म नरे मनुष्ये संबध्यते मुक्तिप्रदाने नोपक्षीणशक्तित्वात् ॥२॥
तुलना = गीतायां निष्कामकर्मकर्तारं कर्माणि न बध्नन्ति एवं जानन् कर्मभिः न लिप्यते। वेदेऽपि चाजीवनं निष्कामकर्मानुष्ठानं ग्राह्यमस्ति यैः कर्मानुष्ठानैः मनुष्यः संसारबन्धने न समायाति मुक्तो भवति च॥

एवमिति = पूर्वैः ~~अनादिभिर्मुमुक्षुभिः~~ पूर्वोत्पन्नैः जनकादिभिः मुमुक्षुभिः मुक्तिमिच्छुभिः अपि एवमित्थमेव ज्ञात्वा कर्तुं कर्म स्वहितार्थं लोकहितार्थञ्च कर्म नित्यं नैमित्तिकं कर्म कृतम् अनुष्ठितम् यस्मात्। तस्माद्धेतोः त्वमपि पूर्वैः पूर्वजैः ज्ञानवृद्धैः पूर्वतरम् अनादिकालप्रवृत्तम् कर्म लोकहितार्थं स्वहितार्थञ्च कुरु ॥१५॥

(मू. गी.) एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥१५॥

(वेद गी.) अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत।
पूर्वीरृतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षत ॥१॥

साम. उत्तरा. १८ अध्या. उत. ८ प्र. २ अर्द्ध. यद्वा "देवस्य सवितुः सवे कर्म कृण्वन्तु मानुषाः।
अथ. कां. ६ सू. २३ मं. ३

हे जीवात्मानः!!!

अस्तावीति = ~~पूर्वैः स्तोतृभिः मुमुक्षुभिर्वा यज्ञादिकर्मद्वारा सः परमात्मा स्तूयते। अतः हे यजमानाः!!!~~ यूयम् ~~अपि~~ इन्द्राय परमैश्वर्यवते परमात्मने पूर्व्यम् (पूर्व्यं) अनादित्वात् पूर्वस्मिन् काले भूतं मन्म मननीयं ब्रह्म स्तोत्रं वेदविहितं कर्म वा वोचत उच्चारयत। पूर्वीः पूर्वकालीनाः ऋतस्य यज्ञस्य बृहतीः बृहत्सामानि अनूषत पठत। तथा स्तोतुः स्तुतिकर्तुः यजमानस्य ~~मम मेधाः~~ कर्मकर्त्रीः बुद्धीः असृक्षत ईश्वरः ~~[illegible]~~ सृजति ॥१॥ मानुषाः सवितुः जगदुत्पादकस्य देवस्य ज्योतिःस्वरूपस्य परमात्मनः सवे सृष्टौ कर्म नित्यं नैमित्तिकं कर्म कृण्वन्तु कुर्वन्तु ॥

तुलना = गीतायां मनुष्यः निष्कामकर्मणा मुक्तो भवति, येः पूर्वे ऋषयः महर्षयश्च मुक्ता अभवन् इत्युक्तम्।
वेदेऽपि च ईश्वरं स्तुहि स्वाध्यायं कुरु बृहत्साम गायत्र एतत्कर्म कर्तुं परमात्मा बुद्धिमय सृजते,, इत्युक्तम्।

किं कर्मेति = कर्म वास्तविकं श्रुतिप्रतिपादितं कर्म किम् ? श्रुत्यविहितं कर्म किम् ? यद्वा कर्मशब्देन किं गृह्यते । अकर्मशब्देन च किं गृह्यते इत्यत्र कवयः सर्वशास्त्रज्ञा अपि मोहिताः मोहं गताः । तत् तस्मात् कारणात् तेः कर्माकर्मविवेचनरहिताय तुभ्यं कर्म कर्मपदवाच्यम् अकर्मपदवाच्यञ्च यद्वा किं करणीयं कर्म, किम् अकरणीयञ्चेति प्रवक्ष्यामि उपदेक्ष्यामि । यत् ज्ञात्वा ययोः तत्त्वं ज्ञात्वा अवबुध्य अशुभात् अकल्याणात् मोक्ष्यसे मुक्तिं प्राप्स्यसि ॥१६॥

(मू॰ गी॰) किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१६॥

(वेदगी॰) . . . . . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . . . . . . . .

कर्मण इति=हि यतः कर्मणः शास्त्रानुष्ठेयवर्णाश्रमधर्मस्य तत्त्वम् अपि बोद्धव्यं ज्ञेयमस्ति। विकर्मणः = बहुसम्बन्धवता विधिना विहितविपरीततया विधीयमानत्वात् विकर्म प्रतिषिद्धं निन्दितं कर्म वा तस्य विकर्मणः तत्त्वम् अपि बोद्धव्यम् ज्ञातव्यमस्ति। अकर्मणः = न कर्म, अकर्म, कर्माभावः कर्मसंन्यासो वा तस्यापि तत्त्वं बोद्धव्यमस्ति। कर्मणः कर्मविकर्माकर्मणां गतिः एवं कर्तव्यमिति कर्तव्यताज्ञानम् गहना गम्भीराऽस्ति सद्गुरूपदेशं विना ज्ञानम् दुर्लभा इति ॥१७॥

(मू॰गी॰) कर्मणो ह्यपि बोधव्यं बोधव्यञ्च विकर्मणः।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥१७

(वेदगी॰) . . . . . . . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . .

कर्मणीति = कर्मणि = देहेन्द्रियैः लौकिको वैदिकश्च सर्वोऽपि व्यापारः कर्म, तस्मिन् कर्मणि अकर्म कर्माकर्तृत्वं यः विद्वान् पश्येत्। तथैव अकर्मणि देहेन्द्रियव्यापारोपरतदशायां कर्म क्रियां मेघगत्या चन्द्रः गतिमान् इव यः विद्वान् पश्येत्। सः मनुष्येषु बुद्धिमान् ज्ञानवान् अस्ति। स एव युक्तः योगी ब्रह्मनिष्ठः अस्ति। स च कृत्स्नकर्मकृत् = कृत्स्नानि सर्वाणि संचितानि प्रारब्धानि च कर्माणि नानायोनिप्रापकाणि ज्ञानखड्गेन कृन्तति छिनत्तीति कृत्स्नकर्मकृत् अस्ति ॥१८॥

(मू. गी.) कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥१८

(वेदगी.) . . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . . .

यस्येति = यस्य मुमुक्षोः सर्वे समारंभाः सम्यक् देहेन्द्रियादिभिः आरभ्यन्ते क्रियन्ते इति समारंभाः देहेन्द्रियव्यापाराः कामसंकल्पवर्जिताः = कामः इच्छा संकल्पः सम्यक्त्वबुद्धिः ताभ्यां वर्जिताः रहिताः भवन्ति। तं ब्रह्मवेत्तारं ज्ञानाग्निदग्धकर्माणं ज्ञानं ब्रह्मतत्त्वविवेकः तदेव अग्निः तेन दग्धानि भस्मीभूतानि सर्वाणि सञ्चित प्रारब्धानि कर्माणि यस्य, तमेव जीवनमुक्तं बुधाः शास्त्रज्ञाः पण्डितम् आहुः कथयन्ति। पण्डा कल्याणी सर्वत्र ब्रह्मावगाहिनी वृत्तिः साऽस्य जाता इति पण्डितः तमेव पण्डितं वदन्ति ॥ १९ ॥

(मू. गी.) यस्य सर्वे समारंभाः कामसंकल्पवर्जिताः।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥

(वेदगी.) इन्द्रे विश्वानि वीर्या कृतानि कर्त्वानि च।
यमर्का अध्वरं विदुः ॥ ६
ऋ. अष्ट. ६ अध्या. ४ व. २४ मं. ६ ऋ. मं. ३. ८ सू. ६२ मं. ६

इन्द्रे इति = यस्य मुमुक्षोः विश्वानि सर्वाणि वीर्या = वीर्याणि कामसंकल्पात्मककर्माणि कृतानि पूर्वसञ्चितकर्माणि कर्त्वानि च = कर्तव्यानि अजन्यफलानि क्रियमाणकर्माणि इन्द्रे परमैश्वर्ययुक्ते परमात्मनि वर्तन्ते। ईदृशं यं ब्रह्मवेत्तारं पुरुषं अर्काः ब्रह्मस्तुतिकारकाः विद्वांसः अध्वरं हिंसारहितं शुद्धं पण्डितं विदुः जानन्ति ॥ ६ ॥ यथा छान्दो. उ. प्रपा. ७ खं. ४, ५, ७ श्रु. १ संकल्पो वाव मनसो भूयान्, चित्तं वाव संकल्पाद्भूयः। ध्यानं वाव चित्ताद्भूयः, विज्ञानं वाव ध्यानाद्भूयः। विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदं सामवेदमाथर्वणं धर्मञ्चाधर्मञ्च सत्यञ्चानृतञ्च साधु चाऽसाधु च हृदयज्ञञ्चाऽहृदयज्ञञ्च रसं चेमञ्च लोकममुञ्च विज्ञानेन विजानाति,, तथा च "तद्यथेषिकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते इति,, छान्दो. अथ च बृह. उप. अध्या. ४ ब्रा. ४ श्रु. २२ "पापमकरवम् इत्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताऽकृते तपतः,,।
[illegible] – गीतायाम् आकाङ्क्षापरित्यागेन निःसंकल्पेन च ज्ञानमुत्पद्यते आत्मवन्तं तत्त्वज्ञानिनं कथयन्तीत्युक्तम्। वेदेऽपि च कृतकर्तव्यकर्माणि ईश्वरार्पणम्। ईश्वरार्पणकर्मकर्ता तत्त्वज्ञानी भवति तञ्च पुण्यपापे न तपत इत्युक्तम्।

त्यक्त्वेति = नित्यतृप्तः ब्रह्मानन्दैकरसेन तृप्तिं गतः, निराश्रयः आश्रयः कामः तस्मान्निर्गतः यः सः निराश्रयः निष्कामः। अत एव कर्मफलासंगं कर्मफलासंगं कर्माणि फलन्ति यत्रेति कर्मफलो देहः। तत्राऽसमन्तात् संगं कर्तृत्वभोक्तृत्वादिसंगं त्यक्त्वा विहाय कर्मणि शरीररक्षामात्रोचिते कर्मकरणे अभिप्रवृत्तः प्रवृत्तिं प्राप्तः सः परदृष्ट्या कुर्वन्नपि स्वदृष्ट्या किञ्चित् कर्म न करोति। अर्थात् स कर्मभिः न लिप्यते इति ॥ २०॥

(मू·गी·) त्यक्त्वा कर्मफलासंगं नित्यतृप्तो निराश्रयः।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः ॥ २०॥

(वेदगी·) . . . . . . . . . . . . . . .

. . . . . . . . . . . . . . .

निराशीरिति = निराशीः निर्गता आशिषो विषयवत्याः कामनाः यस्मात् सः निराशीः विनष्टसर्वकाम इतिभावः। त्यक्तसर्वपरिग्रहः त्यक्ता कौपीनमात्राति रिक्ताः सर्वे परिग्रहाः परिजना येन सः त्यक्तसर्वपरिग्रहः परिजना येन स त्यक्तसर्वपरिग्रहः, योगनिष्ठातत्परः ब्रह्मवित् स्वयं यतचित्तात्मा यतौ निगृहीतौ मनोदेहौ येन स यतचित्तात्मा, यद्वा यतं स्थापितं चित्तमात्मनि एव येन स यतचित्तात्मा शारीरं शरीरस्थितिकारणं प्राण-त्राणमात्रप्रयोजनं केवलं कर्म कुर्वन् अपि किल्बिषं पापं नाप्नोति न प्राप्नोति ॥ २१ ॥

(मू॰ गी॰) निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥२१
* (वेदगी॰) अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता।
गोभाज इत्किलासथ यत् सनवथ पूरुषम् ॥ यजुः १२।७९
कृतस्य कार्यस्य चेह स्फातिं समावह ॥ अथ॰ कां॰ ३ सू॰ २४ मं॰ ५

अश्वत्थे इति = हे जीवाः! मुमुक्षवः! वो युष्माकम् अश्वत्थे = न श्वः चिरं तिष्ठतीति "स्थातेः" कप्रत्ययः, अश्वत्थः चिरम् अस्थायिनि संसारे निषदनम् = अवस्थानमस्ति। तत्रापि वो युष्माकं पर्णे पर्णशीले पाञ्चभौतिकशरीरे वसतिः वासः स्थितिरितिभावः। कृता विहिता। तत्र गोभाजः शरीरस्थितिमात्रप्रयोजनाय इन्द्रियवृत्तिभजनशीलाः इत् एव किल इति निश्चये आसथः भवत ± आसथ इत्यत्र वचनव्यत्ययः। यत् येन हेतुना पूरुषम् परमपूरुषम् परमात्मानं सनवथ संसेवध्वम् ॥ ७९
कृतस्य कर्तव्यस्य कृतस्य च कार्यस्य इह संसारे स्फातिं कर्मोन्नतिं समावह सम्यक्तया कुरु,,
तुलना = गीतायां कर्मफलासंगः, निराकांक्षः, ब्रह्मानन्दतृप्तः, शरीरयात्रायै इन्द्रियद्वारा कर्मप्रवृत्तिकर्ता मुक्तो भवत्येतदुक्तम्।
वेदेऽपि च "संसारवृक्षस्य पत्रात्मके शरीरे जीवः वसति। तत्र उषित्वा शरीरयात्रायै इन्द्रियैः खानपानादिकर्मकरणं, भगवद्भजनञ्च मुक्तिद्वारमस्तीत्युक्तम्।

यद्दृच्छेति = द्वन्द्वातीतः सुखदुःखादिद्वन्द्वेभ्यः विमुक्तः, विमत्सरः = परोत्कृष्टत्वमहत्त्वसहनविरहितः अत एव यद्दृच्छालाभसन्तुष्टः = यद्दृच्छ
अकस्मात् लाभेन सन्तुष्टः सिद्धौ कार्यसिद्धौ अपि कार्ये अनिष्पन्नेऽपि समः तुल्यः कार्यसिद्धौ न हृष्टः, कार्यासिद्धौ न दुःखितः
द्वयोः समः सन् कृत्वाऽपि शरीरयात्रार्थं कर्म कृत्वाऽपि न निबध्यते मुक्तेः प्रतिबन्धं न प्राप्नोति ॥२२॥

(मू.गी.) यद्दृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते ॥२२॥
(वेदगी.) विप्रा अमृता ऋतज्ञा अस्य मध्वः पिबत
मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥ यजुः ९।१८

(व्या.) हे विप्राः = विशेषतया ब्रह्मज्ञानलाभेन सन्तुष्टाः !!! हे अमृताः !!! स्वस्वरूपेण नाशरहिताः जीवात्मानः !!! यद्वा प्राप्तजी
वन्मुक्तिसुखाः !!! अर्थात् हे सुखदुःखादि द्वन्द्वशून्याः विमत्सराः ज्ञानिनः !!! हे ऋतज्ञाः = ऋतं सत्यं ब्रह्म जानन्तीति
ऋतज्ञाः ! हे ब्रह्मज्ञानिनः ! यूयम् अस्य मध्वः = अस्य मधुमयस्य ब्रह्मणः रसं पिबत = पानं कुरुत । मादयध्वम् =
ब्रह्मज्ञानलाभेन हृष्यत । तृप्ताः = ब्रह्मज्ञानेन तृप्ताः सन्तः देवयानैः देवैः चलितैः धर्म्यैः पथिभिः मार्गैः
यात = गच्छत अन्यः कोऽपि मार्गः युष्माकं कल्याणकरः नास्ति ॥ तुलना = गीतायां यद्दृच्छालाभसन्तुष्टः, निर्द्वन्द्वः विम
त्सरः सिद्ध्यसिद्धिसमभावस्थापकः संसारबन्धनात् विमुच्यते इत्युक्तम् । वेदेऽपि च ब्रह्मतत्त्वं जानन्, ब्रह्मामृतरसं पिबन् सुखदुःखादि
द्वन्द्वशून्यः परितुष्टः निराकाङ्क्षः सन् ब्रह्मपथे प्रचलेत् ॥

गतसंगस्येति = मुक्तस्य सर्वत्रात्मबुद्ध्याऽहंममाऽभिनिवेशरहितस्य अहंकारविमुक्तस्येति भावः। गतसंगस्य सज्जते पुमान् अनेन कर्मसु इति संगः कामः, स गतो दूरीभूतो यस्य, तस्य गतसंगस्य कामनारहितस्य। ज्ञानाऽवस्थितचेतसः = ज्ञानं ब्रह्मतत्वविवेकः तत्र अवस्थितं चेतो मनो यस्य, तस्य ज्ञानाऽवस्थितचेतसः। यज्ञाय विष्णवे ब्रह्मार्पणबुद्ध्या लोकहिताय वा आचरतः, कर्माणि कुर्वतः समग्रं कर्माकर्मादिलक्षणं सर्वं कर्म प्रविलीयते समूलं विनश्यति न जन्मादिफलाय प्रभवतीत्यर्थः ॥२३॥

(मू०गी०) गतसंगस्य मुक्तस्य ज्ञानाऽवस्थितचेतसः।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥२३॥
(वेदगी०) अपादु शिप्र्यन्धसः सुदक्षस्य प्रहोषिणः।
इन्दोरिन्द्रो यवाशिरः ॥ साम प्र०२।६।१ ऋ० मं०८ अनु०१। सू०९२ मं०४
बम्बई मुद्रिते मं०८ सू०९२ मं०४

अपादिति = शिप्री आत्मा "शिप्रीः सर्वतः। यद्वा शिप्राः प्राणाः, तद्वान् "अत इनिठनौ" इति मत्वर्थीयः इनिप्रत्ययः। इन्द्रः ज्ञानैश्वर्यवान् ज्ञानाऽवस्थितचेताः। सुदक्षस्य = सद्बुत्पादने कुशलस्य। प्रहोषिणः = प्रकर्षेण सर्वेभ्यः जीवेभ्यः तत्कर्मोऽनुसारं कर्मफलप्रदातुः, इन्दोः प्रकाशमानस्य ज्योतिःस्वरूपस्य परमात्मनः, यवाशिरः सायुज्यमुक्तिमयपाकम् अन्धसः अन्नं आनन्दमयान्नम् "अन्धसः" अन्धः इति विभक्तिव्यत्ययः। अपात् = पिबति पालयति वा ॥ ३ इत्यवधारणे ॥ यवाशिरः = श्रयु मिश्रणामिश्रणयोः। श्रीङ् = पाके आङ् पूर्वस्य "अपस्पृधे[illegible]थानृचुः" इत्यादिना धातोः शिरादेशः ॥ ४ ॥ यथा कठोप० अध्या० १ वल्ली २ श्लो० २ "ओं श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः। श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते।
तुलना = गीतायां कर्मफलाऽसंगः, ज्ञानस्थितिः, यज्ञादिकर्मविधानम्, सुखदुःखादिद्वन्द्वशून्यता, कर्मणो विनाशकाः एते सन्तीत्युक्तम्। वेदेऽपि च परमात्मप्रदत्तज्ञानरसपानं सांसारिककर्मफलविनाशहेतुरित्युक्तम्।

ब्रह्मार्पणमिति = ब्रह्मवित् मुमुक्षुः अर्पणं हविः अर्प्यतेऽनेनेत्यर्पणं चमसस्रुक्स्रुवादिकं सर्वं ब्रह्म एव पश्यति। हविः यज्ञियं यद्धविः होमद्रव्यं तत्सर्वं ब्रह्मैव पश्यति। ब्रह्मणा ब्रह्मरूपेण होमकर्त्रा ब्रह्माग्नौ ब्रह्मरूपे अग्नौ हुतम् हवनक्रिया तदपि ब्रह्मैव पश्यति। ब्रह्मकर्मसमाधिना सर्वस्य ब्रह्ममात्रत्वदर्शनं यत् तद्ब्रह्मकर्म तस्मिन् ब्रह्मकर्मणि समाधिः चित्तस्य स्थापनं यस्य, तेन ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यं प्राप्तव्यम् ॥ २४ ॥

(मू° गी°) ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥

(वेद गी°) ब्रह्म होता ब्रह्म यज्ञाः ब्रह्मणा स्वरवो मिताः। अध्वर्युः ब्रह्मणो जातो ब्रह्मणोऽन्तर्हितं हविः ॥१॥ ब्रह्म स्रुचो घृतवती ब्रह्मणा वेदिरुद्धिता। ब्रह्म यज्ञस्य तत्त्वं च ऋत्विजो ये हविष्कृतः शमिताय स्वाहा ॥२॥
अथ° कां° १९ अनु° ५ सू° ४२ मं° १, २ ॥

ब्रह्महोतेति = ब्रह्म जगदुपादानकारणं तत्त्वं होता हवनकर्ता एव कृत्स्नकार्यकारणप्रपञ्चस्य ब्रह्मात्मकत्वात्" ब्रह्मैवेदं सर्वम्" मुं° २।२।११। "तत् सृष्ट्वा तदेवानुप्राविशत्" इति तै° आर° ८।६ इतिश्रुतेर्ब्रह्मव्यतिरिक्तस्य कस्यचिदभावात्। ब्रह्मणो होत्रादिरूपत्वम्। यज्ञाः ज्योतिष्टोमादयो यज्ञा अपि ब्रह्मैव। तस्मात् ऋचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च इति मुण्डक° २।१।६ श्रुतेः ब्रह्मैव यज्ञा इत्युच्यन्ते। एवं ब्रह्मणैव स्वरवो मिताः = स्वराणां कुष्टादीनां सप्तानाम् उदात्तादीनां च मिताः यज्ञाऽनुप्रविष्टत्वेन उद्गातृत्वं प्रापिताः। उद्गातृप्रमुखोऽपि ब्रह्मैव। अध्वर्युः = अध्वरमिच्छतीति अध्वर्युः यजुर्वेदज्ञः ऋत्विगपि ब्रह्मणः एव जातः उत्पन्नः। प्रागुक्तरीत्या ब्रह्मणः सकाशात् उत्पत्तिरवगन्तव्या। तथा हविः यज्ञसाधनभूतं चरुपुरोडाश्यादिलक्षणं ब्रह्मणि अन्तर्हितम् इन्द्राद्युद्देशेन दत्तमपि ब्रह्मणि एवावतिष्ठते ॥ १ ॥ स्रुचेति: = घृतवतो
होमार्थं घृतेन पूर्णाः स्रुचः होमसाधनभूताः चमसस्रुक्स्रुवादयोऽपि ब्रह्म। ब्रह्मणा एव वेदिः = हविरासादनसाधना ब्रह्मणा एव उद्धृता उद्धननखननिर्माणैः संपादिता। यज्ञस्य ज्योतिष्टोमात्मकस्य यागस्य तत्त्वं पारमार्थिकं रूपं च ब्रह्मैव। अत्र तत्त्वं चेति विशेषितत्वात् अत्रोक्तानां होत्रादीनां पारमार्थिकं रूपं ब्रह्मैव तत्रैव परिकल्पितत्वात् कृत्स्नप्रपञ्चस्य। यथा मृदुपादानभूताः शरावादयो मृदेव, एवं ब्रह्मोपादानभूतास्तत्त्वतो ब्रह्मैवेत्यभिप्रायः। ये च हविष्कृतः हविष्कर्तारः ऋत्विजः अपि ब्रह्मैव। शमिताय होत्राद्यात्मना शं सुखम् इताय प्राप्ताय ब्रह्मणे यद्वा समिताय इति पाठः = उक्तप्रकारेण होत्राद्यात्मना संमिताय अभेदम् आपन्नाय ब्रह्मणे इत्यर्थः स्वाहा स्वाहुतम् अस्तु ॥ २ ॥ बृह° उप° अध्या° ४ ब्रा° ४ श्रु° ५ "स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः" अपि च मुण्डको° मुं° ३° २ खं° २ श्रु° ४ "ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण। अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्" तत्र ना = गीतायां यज्ञाङ्गाः, यज्ञकर्माणि ब्रह्मैवेत्युक्तम्। वेदेऽपि च समस्तं प्रपञ्चमात्रं ब्रह्मैवेत्युक्तम् ॥ १३५

दैवमिति = देवान् उद्दिश्य प्रवृत्तो यज्ञः दैवः, तं दैवं यज्ञं श्रौतं वा स्मार्तं वा, अपरे मुक्तिकामाः योगिनः कर्मयोगिनः गृहस्था पर्युपासते, नुति कुर्वन्ति। अपरे गृहस्थेभ्यो भिन्नाः संन्यासिनः ब्रह्माग्नौ "**सत्यं ज्ञानमनन्तं ब्रह्म**" सच्चिदानन्दस्वरूपं ब्रह्म एव अग्निः अविद्यादिनाशकत्वात् अग्निरुच्यते। अतः तस्मिन् ब्रह्माग्नौ यज्ञं यामरैः विषयोपभोगैरिज्यते इति यज्ञः आत्मा सोपाधिकः तं यज्ञेन एव आत्मना निर्विशेषस्वरूपेण एव जुहृति, ब्रह्म अभिन्नत्वेन अनुभवन्तीत्यर्थः। २५॥

**(मू. गी.) दैवमेवापरे यज्ञं योगिनः पर्युपासते।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति॥२५॥**

**(वेदगी.) हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान्।**
**शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम॥११॥**

निरु. अध्या. १ खं. ११

हविर्भिरिति = एके कर्मयोगिनः पुरुषाः (हविर्भिः) चरुपुरोडाशघृतादिहविर्भिः जुहृतीति शेषः। एके पुरुषाः सवनेषु यज्ञेषु सोमान् अमृतवल्लीरसं सुन्वन्तः निष्पीडयन्तः शचीः इन्द्रादिदेवानां शक्तिस्तुत्या तत्तद्देवान् मदन्तः हर्षयन्तः इतः मनुष्यलोकात् स्वः स्वर्गलोकं सचन्ते प्राप्नुवन्ति केचित् पुरुषाश्च दक्षिणाभिः निष्कामदानेन ज्ञानयोगिनः संसारार्णवात् पारं गच्छन्ति। हे परमात्मन्! (जिह्मायन्त्यः) कुटिलाचरणं कुर्वन्त्यः वयं (नरकम्) नरकं नीचयोनीः वा न पताम, पतिताः न भवेम॥ ११

तुलना = गीतायां कर्मयोगी, ज्ञानयोगी यजन्ति इत्युक्तम्। वेदेऽपि च हविर्द्वारा यज्ञकर्तारः योगिनः देवान् यजन्ते, निष्कामदानकर्तारः ज्ञानयोगिनः संसारार्णवपारं गच्छन्ति। अन्यथा नरकं पतन्तीत्युक्तम्॥ ११

श्रोत्रादीति = अन्ये नैष्ठिकब्रह्मचारिणः इन्द्रियाणि श्रोत्रादीनि वागादीनि च संयमाग्निषु इन्द्रियाणां तत्तद्विषयनिग्रहरूपाग्नौ जुह्वति इन्द्रियनिग्रहरूपं यज्ञं कुर्वन्तीत्यर्थः। अन्ये गृहस्था मुमुक्षवः स्वस्ववर्णधर्मनिष्ठाः शब्दादिविषयान् यथार्हसमये इन्द्रियरूपाग्नौ जुह्वति। विषयानुभवनियम एव तेषां यज्ञ इत्यर्थः। २६ ॥ अपरे च ध्यानिनः पुरुषाः सर्वाणि सकलानि इन्द्रियकर्माणि प्राणकर्माणि च उच्छ्वासनिश्वासादीनि कर्माणि ज्ञानदीपिते ज्ञानेन प्रकाशिते आत्मसंयमयोगाग्नौ स्वस्वरूपे आत्मनि संयमयोगः मनोनिरोधः समाधिः एवाग्निः तस्मिन् आत्मसंयमयोगाग्नौ जुह्वति। प्राणेन्द्रियव्यापारं निरुध्य शुद्धात्मानम् एव अनुभवन्ति ॥ २७ ॥

(मू. गी.) श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति।
शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे। आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

(वेदगी.) घृतस्य जूतिः समना सदेवा संवत्सरं हविषा वर्धयन्ती
श्रोत्रं चक्षुः प्राणोऽच्छिन्नो नो अस्त्वच्छिन्ना वयमायुषो वर्चसः ॥ १ ॥
अथ. कां. १९ अनु. ७ सू. ५८। मं. १ ऋग्. "अग्ने विश्वेभिरग्निभिर्देवेभिर्महया गिरः। यज्ञेषु य उ चायवः ॥" ऋ. मं. ३ सू. २४ मं. ४

घृतस्येति = घृतस्य दीप्तस्य परमात्मनः "घृ क्षरणदीप्त्योः" जूतिः ज्ञानं "सर्वेषां गत्यर्थानां ज्ञानार्थत्वात् जूतिशब्देन सर्वत्र प्रसृतं ज्ञानम् उच्यते। यथा च "मतिर्मनीषा जूतिः स्मृतिः, संकल्पः क्रतुरसुः कामवश इति सर्वाण्येतानि प्रज्ञानस्य नामधेयानि भवन्ति" ऐ. आ. २।६।१ अर्थात् घृतस्य जूतिः परमात्मनः स्वरूपविषयं ज्ञानं समना: समानमनस्का: सर्वेषां प्राणिनां मनांसि यस्मिन् प्रज्ञाने समाश्रितानि। सदेवा: देवा इन्द्रियाणि सर्वप्राणिसम्बन्धीनि तत्सहिता परमात्मविषया बुद्धिः, संवत्सरं संवसन्ति अत्र भूतानि इति संवत्सरः परमात्मा तं हविषा शब्दस्पर्शादिरूपप्रपञ्चेन हविषा वर्धयन्ती पुष्णन्ती भवति। वस्तुकृतपरिच्छेदपरिहार एव परमात्मनः पोष इत्यर्थः। नः ज्ञानयज्ञप्रवर्तकानाम् अस्माकं श्रोत्रं चक्षुः प्राणः एतदुपलक्षणं ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च प्राणः शरीरधारको वायुः, अच्छिन्नम् छेदः विनाशः तद्रहिताः परमात्मलीनत्वेन विनश्वरा मा भवेयुरिति। वयं च ब्रह्मज्ञानसंलग्नताः आयुषः जीवनस्य वर्चसस्तेजसः अच्छिन्नाः विनाशरहिताः भूयास्म। ब्रह्मज्ञानरतिं विना आयुः व्यर्थमेवाऽतोऽस्माकम् आयुः व्यर्थतां मा गच्छेत् ॥ १ ॥ अग्ने इति हे अग्ने विश्वेभिः सर्वैः देवेभिः अग्निभिः इन्द्रियाग्निभिः त्वं गिरः वाणीः महय पूजय तथा चायवः यज्ञे पूजकाः ये सन्ति तानपि उन्नय ॥ बृह. उप. अध्या. ४ ब्रा. ५ श्रु. ६ आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम् ॥ तथा च बृ. अध्या. ४ ब्रा. ५ श्रु. ७ ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद। देवास्तं परादुर्योऽन्यत्रात्मनो देवान् वेद ॥ बृ. उ. अध्या. ४ ब्रा. ५ श्रु. ८ यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयात् ग्रहणाय ग्रहणेन दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥

गीतायां = गीतायां इन्द्रियसंयमः, शब्दादिविषयाणामिन्द्रियेषु लयः, इन्द्रियप्राणानां कर्मणि च ज्ञाने विलयः, इत्युक्तम्। वेदेऽपि च मन्त्रे श्रोत्रचक्षुरादिकानां चैवं वर्चसः [illegible] प्राणानां प्राणोऽच्छिन्नोऽस्त्विति वर्धनं प्रार्थ्यते सा विषयलीनेत्युक्तम्

द्रव्ययज्ञा इति = तथा अपरे केचन मुमुक्षवः जीवाः द्रव्ययज्ञाः सत्पात्रेषु सद्बुद्ध्या श्रद्धया च द्रव्यदानमस्माकं यज्ञ इति ये कुर्वन्ति ते द्रव्ययज्ञाः। केचन तपोयज्ञाः ये चान्द्रायणोपवासादिरूपं यज्ञं कुर्वन्ति ते तपोयज्ञाः। तथाऽपरे आसनप्राणायामादि योगाङ्गैः युक्तः चित्तनिरोधरूपं यज्ञं ये कुर्वन्ति, ते योगयज्ञाः सन्ति। तथा अपरे केचन स्वाध्यायज्ञानयज्ञाः "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं सम्बध्यते" अतः स्वाध्याययज्ञाः ज्ञानयज्ञा इति। ये नियमेन वेदस्वाध्यायं कुर्वन्ति ते स्वाध्याययज्ञाः। शास्त्रपरिशीलनं नियमेन ये कुर्वन्ति ते ज्ञानयज्ञाः। एवंविधा यतयः स्वस्वनियमे यत्नशीलाः संशितव्रताः = तत्र तत्र स्वनिष्ठायां संशितम् अतितीक्ष्णं व्रतं नियमो येषां ते संशितव्रताः बहवः सन्तीति २८

अपाने इति = अपरे केचन मुमुक्षवः अपाने अपानवायौ प्राणं निःश्वासहेतुं प्राणवायुं जुह्वति हवनं कुर्वन्ति। बहिस्थः प्राणवायुम् आकृष्य अपानवायौ योजयन्ति। अयं पूरकाख्यः प्राणायामः। तथा अपरे मुमुक्षवः प्राणे प्राणवायौ अपानम् अपानवायुं जुह्वति रेचकप्राणायामं कुर्वन्तीत्यर्थः। प्राणापानगती रुद्ध्वा = वायो बहिर्गमनं प्राणः, वायोरन्तः प्रवेशः अपानं प्राणापानयोः गती मुखनासिकाभ्यां वायोर्निर्गमनप्रवेशौ विरुद्धे निरुध्य प्राणायामं कुम्भकप्राणायामं कृत्वा प्राणायामपरायणाः प्राणायामकरणे तत्पराः भवन्ति ॥ २९ ॥

(मू. गी.) द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे। स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥ अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे। प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥

(वेद गी.) उप॒ास्मा॒न् प्रा॒णो ह्व॑यता॒मुप॑ व॒यं प्रा॒णं ह॑वामहे। वर्चो॑ ज॒ग्राह॑ पृथि॒व्य॑न्तरि॑क्षं॒ वर्चः॒ सोमो॒ बृह॒स्पति॑र्विध॒र्ता ॥ अथ. कां. १९ अनु. ६ सू. ५८ मं. २

उपेति = प्राणः शरीरधारकः पञ्चवृत्तिकः वायुः अस्मान् मानसयज्ञप्रवर्तकान् उपह्वयताम् = अनुजानातु। वयं पूरककुम्भकरेचकौ च प्राणायामपरायणाः मुमुक्षवः प्राणं प्राणोऽपानादिपञ्चविधं वायुम् उपह्वयामहे। स्वस्वशरीरे चिरकालाऽवस्थानाय आकारयामास प्रार्थयामहे इतिभावः। पृथिवी पार्थिवः देहः अन्तरिक्षं सर्वविषयग्राहकं मनः च वर्चः प्राणायामशक्त्या स्वस्वधारकशक्तिमत्तेजः ओजो वा अस्मभ्यं दातुं जग्राह स्वीचकार। तथा च सोमः अन्तःकरणं बृहस्पतिः बुद्धिः विधर्ता विशेषेण धर्ताऽहंकारः अस्मभ्यं दातुं वर्चः = प्राणायामकरणेनैव तेजः अस्मभ्यं दातुं जग्राह स्वीचकारेति ॥ २९ ॥

तुलना = गीतायां बहुधा यज्ञव्रतादयः उक्ताः प्राणायामी प्रतीयमानं। वेदेऽपि च प्राणः अपानः, अपानः प्राणे च समाविशन्, प्राणायामे प्रवृत्तिकरणेन शुभगतिं लभते।

अपरे इति-अपरे केचित् यतयः नियताहाराः अतिस्वल्पाहाराः प्राणान् प्राणान्तर्वायून् प्राणेषु वायुभेदेषु जुह्वति। वस्तिधौत्यादिक्रियया अन्तःशोधनं कुर्वन्तीत्यर्थः। सर्वेऽपि एते यज्ञविदः दैवादियज्ञाऽनुष्ठातारः यज्ञक्षपितकल्मषाः = यज्ञैः यज्ञाऽनुष्ठानैः क्षपिता नाशिताः कल्मषाः पापानि येषां, ते यज्ञक्षपितकल्मषाः भवन्ति ॥ ३० ॥

(मू. गी.) अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३०

(वेद गी.) मुनयो वातरशनाः पिशंगा वसते मला। वातस्यानु ध्राजिं १.१०.१३६ मं. २
यन्ति यद्देवासो अविक्षत ॥ ऋ. अष्ट. ८ अध्या. ७ व. २४ मं. २ (यद्वा)
युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः। रोचन्ते रोचना दिवि ॥ यजुः २३।५
ऋ. अष्ट. १ अध्या. १ व. मं. १। साम उत्त. ६ प्र. ३ यार्ध। अथर्व कां. २० अनु. २ सू. २६ मं. ४

मुनय इति = वातरशनाः वातः वायुरेव रशना जिह्वा रसग्रहणशक्तिः येषां ते वातरशनाः वायुमात्र भक्षणशीलाः मुनयः अतीन्द्रियदर्शिनः, पिशंगाः पिशंगानि कपिलवर्णानि, मला मलिनानि वल्कलरूपाणि वासांसि वसन्ते आच्छादयन्ति धारयन्ति। ते यत्पदा देवासः अल्पाहारादितपोमहिम्ना दीप्यमानाः सन्तः अविक्षत ब्रह्मस्वरूपं प्राविशन्। तदा ते वातस्य वायोः ध्राजिं गतिम् अनुयन्ति अनुगच्छन्ति, अर्थात् प्राणोपासनया प्राणरूपिणः वायुभावं प्रपन्नाः वायुवत्सदागतयः भवन्तीत्यर्थः ॥ २ ॥
युञ्जन्तीति = परितस्थुषः = परितोऽवस्थितस्य लोकत्रयवर्तिनः यतेयः। ब्रध्नं बध्नाति सर्वं जगदिति ब्रध्नः महो ब्रध्न इति पंचविंशति संख्याकेषु महन्नामसु पाठः। ब्रध्नं महान्तम् अरुषम् = रुष रिष हिंसार्थः। रोषन्तीति रुषा हिंसकाः। न सन्ति रुषा यस्य असौ अरुषः, तम् अरुषम् अहिंसकम्। चरन्तं चरतीति चरन् वायुः "वायुर्वै चरन्" तै. ब्रा. ३।९।४।२ वायुं युञ्जन्ति स्वकीये शरीरे प्राणायामेन संबद्धं कुर्वन्ति। ते दिवि द्युस्थाने परब्रह्मलोके रोचना रोचमानाः नक्षत्रवत् रोचन्ते प्रकाशन्ते। तुलना = गीतायां मिताहाराः पुरुषाः प्राणायामेन भजन्ते। तपोव्रतादिविधानेन पापेभ्यः क्षीणा भवन्ति अपि च ते प्राणायामाभ्यासरताः सर्वपापविमुक्ताः सन्तः मुक्तिधामनि विराजन्ते ॥

यज्ञशिष्टेति = यज्ञक्षपितकल्मषा यतयः यज्ञशिष्टामृतभुजः यज्ञस्यानुष्ठानेन शिष्टः यज्ञशेषः यः अमृतः, तं भुञ्जन्तीति यज्ञशिष्टामृतभुजः ते यज्ञशिष्टामृतभुजः। सनातनं सदातनं नित्यं ब्रह्म यान्ति प्राप्नुवन्ति। हे कुरुसत्तम! हे कुरुश्रेष्ठ! अर्जुन! अयज्ञस्य देवादियज्ञेषु एकोऽपि यज्ञः न विद्यते यस्य सः अयज्ञः, तस्य अयज्ञस्य यज्ञकर्तृत्वरहितस्य अयं लोकः लोक्यते इति लोकः देहः नास्ति। तस्य एतन्मानवदेहग्रहणमपि व्यर्थम्। इतोऽन्यः लोकः शिवब्रह्मादिलोकः कुतः कस्माद्धेतोः भवितुमर्हति। ३१॥

(मू० गी०) यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥३१॥

(वेदगी०) पृथक् प्रायन्प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा। [ऋ० मं० १०
न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः ॥ऋ० मं० १० सू०
अथर्व० कां० २० सू० ४४ मं० ६ निरु० ५।२५
(यद्वा) अग्ना यो मर्त्यो दुवो धियं जुजोष धीतिभिः। भसन्नु ष प्र पूर्व्य
इषं वुरीतावसे। ऋ० अष्ट० ४ अ० पा० ५ व० १६ मं० १ पूर्वार्द्ध श्लोकपादे मन्त्रः
मं० ३ ह० सू० १२ मं० १
परा चिच्छीर्षा ववृजुस्त इन्द्रायज्वानो यज्वभिः स्पर्धमानाः।
प्र यद्दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः॥५॥
ऋ० अष्ट० १ अध्या० ३ व० १ मं० ५

पृथगिति = हे जीवात्मन्! ते याज्ञिकाः जनाः पृथक् प्रायन् देवलोकान् पृथक् गच्छन्ति। ये प्रथमाः पूर्वे याज्ञिका जनाः देवहूतयः देवानाम् आह्वातारः दुष्टरा दुस्तारा ~~[illegible]~~ अन्यैः दुस्तराणि श्रवस्यानि श्रवणीयानि यशांसि अकृण्वत अकुर्वत अथ च ये तद्विमुखा जना यज्ञियां यज्ञात्मिकां नावम् आरुहम् आरोढुम् न शेकुः न शक्नुवन्ति। ते केपयः कुत्सितपूयकर्माणः पापकर्माणो जनाः ईर्म एव = यज्ञेनैव न्यविशन्त नीचैराविशन्ति अधोगतिं प्राप्ता इत्यर्थः। तथा च यास्कः

"पृथक् प्रायन् पृथक् प्रयते। प्रथमा देवहूतयो देवानाम् आहूयन्त अकुर्वत श्रवणीयानि दुस्तरा ति अन्ये ये शक्नुवन्। यज्ञियां नावमारोढुम् ~~अथ ये नाशक्नुवन्~~ ईर्मैव ते न्यविशन्तेहैव ते न्यविशन्त इहलेनैव ते न्यविशन्त अस्मिन्नेव लोके" इति। (यद्वा)

अग्ना इति = यः मुमुक्षुः मर्त्यः मनुष्यः अग्ना = अग्नौ अग्निविषयं दुवः परिचरणं हविः प्रक्षेपणं धियं कर्मोपसनाज्ञानं वा दैवयज्ञादिलक्षणं धीतिभिः स्तुतिभिः सार्द्धं जुजोष सेवते आचरति। स मर्त्यः पूर्व्यः आयुषाऽल्पीयानपि यद्वा सर्वेभ्यः पूर्वेभ्यः मुख्यः सन् नुचित्प्रं प्रभसत् प्रभासते प्रकृष्टप्रकाशवान् भवति। जीवनमुक्त्यवस्थायामपि अवसे स्वदेहरक्षायै इषमन्नं वृणीते वृणीते संभजते शत्रुसकाशादपि लभते इत्यर्थः। पूर्वार्द्धश्लोकसंमतोऽयं मंत्रः। (अपरार्द्धे च)।

पराचिदिति = हे इन्द्र! हे जीवात्मन्! अयज्वानः = यज्ञस्य अकर्तारः स्वयं यागकर्तृत्वरहिताः प्रत्युत अपरैः यज्वभिः यागाऽनुष्ठातृभिः सह स्पर्धमानाः स्पर्धां कुर्वन्तः सन्तः। शीर्षा स्वकीयानि शिरांसि पराचित् पराङ्मुखानि एव कृत्वा ववृजुः व्रजन्ति गच्छन्ति। हे उग्र! हे शौर्यवन् परमात्मन्! हे हरिवः! हे पापहारिन्! जगदीश्वर! हे स्थातः! हे ~~सर्वत्र व्यापक परमेश्वर~~ हे जगत्स्थापक! यत् यदा दिवः अन्तरिक्षात् रोदस्योः द्यावापृथिव्योः अर्थात् भूर्भुवः स्वर्लोकत्रयात् अव्रतान् यज्ञव्रतपालनरहितान् अधमः त्वं निःसारय दूरीकुरु इत्यर्थः। ५ "अपरार्द्धश्लोकसंमतोऽयं मंत्रः। तुलना = गीतायां यज्ञदानव्रतादिकर्तारः परमात्मचरणकमलेषु प्राप्नुवन्ति। यज्ञ न करने वाले लोक तीनों लोकों में सुख नहीं पाते। इत्युक्तम्। वेदेऽपि च यज्ञदानव्रतादिकर्तारः प्रजावाः सुखिनः, मुख्याः, शत्रुघ्नश्च भवन्ति। अयाज्ञिकाश्च याज्ञिकैः सह स्पर्धन्ते नीचयोनौ च जन्म लभन्ते इत्युक्तम्।

एवमिति = एवम् इत्थं बहुविधा बहवः अनेकप्रकाराः यज्ञाः ब्रह्मणो वेदस्य मुखे मुखद्वारा वितताः विस्तृताः कथिता इत्यर्थः। तान् सर्वान् यज्ञान् कर्मजान् कर्मभ्यो जाताः कर्मजाः वागादीन्द्रियसंभवाः, तान् कर्मजान् कर्माणि एव तान् सर्वान् विद्धि जानीहि। एवम् इत्थं ज्ञात्वा ज्ञानं प्राप्य संसारात् विमोक्ष्यसे विमुक्तो भविष्यसि ।३२

(मू० गी०) एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे।
कर्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥३२॥

(वेद गी०) ऐन्द्राग्नं पावमानं महानाम्नीर्महाव्रतम्।
उच्छिष्टे यज्ञस्याङ्गान्यन्तर्गर्भ इव मातरि ॥६ —काः सन्ति
अथ० कां० ११ अनु० ४ सू० ७ मं० ६ त: १० यावत् सर्वे मंत्रा यज्ञप्रतिपाद

ऐन्द्राग्नमिति = इन्द्राग्न्योः स्तावकं ऐन्द्राग्नं नामयज्ञः "इन्द्राग्नी आ गतं सुतम्" इति ऋचेः ३।१२।१ गीयमानं साम ऐन्द्राग्नं प्रातः सवने प्रयुज्यमानम्। पावमानं त्रिषु अपि सवनेषु सवनादौ गीयमानं पवमानसोमदेवताकं साम। महानाम्नीः = महानाम्न्यः "विदा मघवन् विदा गातुम् अनुशंसिषो दिशः" ऐ० आ० ४।१ इत्याम्नाता ऋचः। तत्र गीयमाने शाक्वरं साम अपि महानाम्नीशब्देन उच्यते। ताश्च द्वादशाहमध्यवर्तिनि दशरात्रे पञ्चमेऽहनि पृष्ठसामत्वेन विनियुक्ताः, महाव्रतम् राजनगायत्र बृहद्रथन्तर भद्राख्यैः पञ्चभिः सामभिः क्रियमाणं स्तोत्रम्। एकाहोऽपि सोमयागः, तद्वान् महाव्रतम् इत्याख्यायते। एवम् ऐन्द्राग्नादीनि यज्ञस्याङ्गानि उच्छिष्टे ब्रह्मणि वेदे वा "अथात आदेशो नेति नेति" बृह० २।३।११ "नेह नानास्ति किञ्चन" बृ० ४।४।१९ इत्येवं दृश्यप्रपञ्चनिषेधात् ऊर्ध्वं तदवधित्वेन शिष्यते अवशिष्यते इत्युच्छिष्टं बाधावधित्वेन शिष्यमाणं परं ब्रह्म, अस्मिन् उच्छिष्टे ब्रह्मणि वेदे वा अन्तः मध्ये मातरि गर्भे इव वर्तन्ते। यथा मातुरुदरमध्ये आश्रितः गर्भः पुष्यन् अभिवर्द्धते। एवम् एतान्यपि कारणभूते ब्रह्मणि आश्रितत्वेन भाव्यमानानि अभिमतं यज्ञफलसमृद्धं कुर्वन्ती त्यर्थः॥ अपरे मंत्राः "राजसूयं वाजपेयमग्निष्टोमस्तदध्वरः। अर्काश्वमेधावुच्छिष्टे जीवबर्हिर्मदिन्तमः॥७॥ अग्न्याधेयमथो दीक्षा कामप्रश्छन्दसा सह। उत्सन्ना यज्ञाः सत्राण्युच्छिष्टेऽधि समाहिताः॥८॥ अग्निहोत्रं च श्रद्धा च वषट्कारो व्रतं तपः। दक्षिणेष्टं पूर्तं चोच्छिष्टेऽधि समाहिताः॥९॥ एकरात्रो द्विरात्रः सद्यःक्रीः प्रक्रीरुक्थ्यः। ओतं निहितमुच्छिष्टे यज्ञस्याणूनि विद्यया॥ चतूरात्रः पञ्चरात्रः षड्रात्रश्चोभयः सह। षोडशी सप्तरात्रश्चोच्छिष्टाज्जज्ञिरे सर्वे ये यज्ञा अमृते हिताः ११



तुलना = गीतायां बहुधा यज्ञा उपदिष्टाः, ते कर्मजा इत्युक्तम् येषामाचरणेन मनुजः संसारात् मुच्यते।
वेदेऽपि च बहुधा यज्ञा उक्ताः ते सर्वे वेदेभ्यः उत्पन्नाः सन्ति॥

श्रेयानिति = हे परंतप! हे अर्जुन! ~~द्रव्य~~ मंत्रतंत्रादि क्रियासमसाध्यात् यज्ञात् ज्ञानयज्ञः श्रेयान् श्रेष्ठः अस्ति। हे पार्थ! हे अर्जुन! सर्वं श्रौतस्मार्त लौकिकं कर्म अखिलं खिलः शेषः, स न विद्यते यत्र तदखिलं, निःशेषं ज्ञाने ज्ञानयज्ञे परिसमाप्यते समाप्तिं भवति। ज्ञाने प्राप्ते शतशो जन्मार्जितं ग्रामिकर्म अखिलं ज्ञान शक्त्या सूर्यप्रभया तम इव निर्मूल्यते इत्यर्थः ॥३३॥

(मू·गी·) श्रेयान् द्रव्यमयाद् यज्ञात् ज्ञानयज्ञः परंतप।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥

(वेदगी·) यत् पुरुषेण हविषा यज्ञं देवा अतन्वत।
अस्ति नु तस्मादोजीयो यद् विहव्येनेजिरे ॥ ४

अथ· कां· ७ अनु· १ सू· ५ मं· ४

यत्पुरुषेणेति = देवाः = दीव्यन्तीति देवाः ~~मुमु~~क्षवः यजमानाः पुरुषेण ~~यज्ञपुरुषेण दैवातिरात्राश्वमेधप्रभृ~~ आत्मतियज्ञेन हविषा ~~हविरादिद्रव्येन~~ यज्ञं होमसाधनमात्रं हवनीयं यद्वा यज्ञस्वरूपं प्रजापतिम् अतन्वत विस्तारितवन्तः। एवं द्रव्य विविध ... तंत्रादिना दैवा दिययज्ञात् ओजीयः अतिशयेन ओजस्वि सारवत् नु निश्चयेन अस्ति विद्यते। विहव्येन = हव्यं होतव्यहविः हवीसहितेन ज्ञानयज्ञेन ईजिरे इष्टवन्तः स्वात्मानं परमात्माऽभेदेन साक्षात्कृतवन्त इति यत्। तद् ओजीयः। द्रव्ययज्ञज्ञानयज्ञयोः सार्वाल्पत्वात् फलसाम्येऽपि पुरुषमेधस्वरूपद्रव्यादियज्ञफलस्य कर्मजन्यत्वेन विनाशित्वम्। ज्ञानयज्ञफलं तु न तथा, तस्मात् स्वर्गलोकब्रह्मादिलोकफलप्रापकात् पुरुषमेधस्वरूपद्रव्ययज्ञादपि सर्वात्मकब्रह्मस्वरूपावाप्तिफलप्राप्तिको ज्ञानयज्ञः श्रेयान्। अयमेव भावोऽनेन मंत्रेण अभिधीयते ॥४ गीतायां द्रव्ययज्ञात् ज्ञानयज्ञः श्रेयान् इत्युक्तम्। वेदेऽपि च पौर्णमास्यादिका बहुविधा यज्ञा उक्ताः, सर्वेभ्यः ज्ञानयज्ञः उत्तमः इत्युक्तम्।

तद्विद्धीति = द्रव्ययज्ञाद्युत्कृष्टतरं मोक्षफलप्रदं तत् ज्ञानं गुरुभ्यः इति शेषः विद्धि जानीहि। ज्ञानिनः ज्ञानवन्तः तत्वदर्शिनः ब्रह्मजीवाऽभेदतत्वस्य द्रष्टारः ते गुरवः, शमादिगुणवते ते तुभ्यं प्रणिपातेन दण्डवत् साष्टाङ्ग नमस्कारेण, सेवया श्रद्धाभक्तियुतया शुश्रूषया, परिप्रश्नेन विनयपूर्वकप्रश्नेन ज्ञानं ब्रह्मजीवाऽभेदविवेकात्मकं तत्वम् उपदेक्ष्यन्ति इत्यथा उपदेशं करिष्यन्तीति ॥ ३४ ॥

(मू. गी.) तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः ॥ ३४ ॥

(वेद गी.) ब्राह्मणेभ्यो ऋषभं दत्वा वरीयः कृणुते मनः।
पुष्टिं सो अघ्न्यानां स्वे गोष्ठेऽव पश्यते ॥ १९ ॥
अथ. कां. ९ अनु. २ सू. ४ मं. १९

ब्राह्मणेभ्य इति = तत्त्वदर्शी मुमुक्षुः ब्राह्मणेभ्यः ब्रह्मज्ञानविद्भ्यः गुरुभ्यः ऋषभं ~~[illegible]~~ सर्वश्रेष्ठं विषयादिसेकारं मनोयोगं दत्वा मनः स्वकीयं चित्तं वरीयः सर्वश्रेष्ठं शुद्धतरं ब्रह्मजीवतत्वतादात्म्यसंबन्धकारकं कृणुते विधत्ते। सः गुरुभ्यः सज्ज्ञानोपदेशं श्रुत्वा अघ्न्यानाम् अहन्तव्यानां ब्रह्मप्राप्तिकर्तॄणां चेतसः वृत्तीनां पुष्टिं वृद्धिपूर्वकं पोषणं स्वे गोष्ठे स्वे स्वकीये गोष्ठे = गाव इन्द्रियाणि ~~[illegible]~~ तद्वृत्तयश्च तिष्ठन्ति अत्र इति गोष्ठं मनः "घञर्थे कविधानम्" इत्यनेन। तस्मिन् गोष्ठे मनसि अवपश्यते निरीक्षते ॥ १९ ॥ तुलना = गीतायां गुरुप्रणामेन सेवया च प्रश्नैः उपदेशः गृहीतव्यः। वेदेऽपि च "उपदेशसमये ब्रह्मजिज्ञासवः दत्तचित्ताः भवेयुः, समाहितचित्तस्य वृत्तयः स्थिरीभवन्ति। इत्युक्तम्

यज्ज्ञात्वेति = हे पाण्डव! हे अर्जुन! गुरुभिः उपदिष्टं यत् ज्ञानं ज्ञात्वा संप्राप्य एवम् इदानीमिव पुनः भूयः मोहम् "एते मद्भ्रातरः पितृव्याः" "अहमेषां भ्रातृजः" इत्यादिकिंकर्तव्यविमूढत्वं न यास्यसि न प्राप्स्यसि। येन प्राप्ततत्त्वविवेकेन भूतानि समग्रप्राणिनः अशेषेण सम्पूर्णरीत्या आत्मनि स्वे आत्मनि द्रक्ष्यसि अवलोकयिष्यसि। तथा च अथो अनन्तरं मयि ब्रह्मस्वरूपे मम देहे द्रक्ष्यसि ॥३५॥ अपि चेदिति = सर्वेभ्यः त्रिलोकस्थेभ्यः पापेभ्यः महापातकोपपातकादिपापकर्तृभ्यः अपि चेत् यदि त्वं पापकृत्तमः सर्वेभ्योऽतिशयपापकर्ताऽसि। एवं विधे त्वयि सत्यपि सर्वं वृजिनं पापं ज्ञानप्लवेन एव पापार्णवं ज्ञानपोतेन संतरिष्यसि पापसमुद्रतरणं प्राप्स्यसि ॥३६॥

(मूलम्) यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव। येन भूतान्यशेषेण
द्रक्ष्यस्यात्मन्यथो मयि ॥३५॥ अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृ-
त्तमः। सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥३६॥

(वेदगी॰) त्वं पुरूण्याभरा स्वश्व्या येभिर्मंसै निवचनानि शंसन्।
सुगेभिर्विश्वा दुरिता तरेम विदो षु ण उर्विया गाधमद्य ॥१०॥
ऋ॰ अष्ट॰ ८ अध्या॰ ६ व॰ १८ मं॰ १० मं॰ १० सू॰ ११३ मं॰ १०

त्वमिति = निवचनानि नितरां गुरूपदिष्टानि वाक्यानि शंसन् स्तुवन् त्वं स्वश्व्या स्वश्व्यानि ब्रह्मजीवाऽभेदतत्त्वविषयान् सम्यक्तया प्रवर्तितशीलानि पुरूणि बहूनि ज्ञानानि गुरुसकाशात् आभर आहर गृहाण। येभिः ज्ञानैः युक्तमिति शेषः। त्वाम् अहं मंसै पूजायोग्यं मन्ये। मन्यतिः स्तुतिकर्मा। सुगेभिः सुष्ठु गन्तव्यैः ज्ञानैः विश्वा = विश्वानि सर्वाणि दुरिता = दुरितानि पापानि तरेम पारं कुरु" तरेम = ~~तरं~~ पारं कुर्याम ~~इत्यत्र पुरुषव्यत्ययः वचनव्यत्ययश्च~~। अद्य अस्मिन् ज्ञानमार्गे गाधं = गम्यमानं नः मदुक्तं वचनम् उर्विया उरुत्वेन बहुमानेन सु सुष्ठु विदो विद + उ = जानीहि एव ॥१०॥
तुलना = गीतायां गुरुज्ञानमहत्त्वम्, गुरुज्ञानेन भगवद्दर्शनम्, तेन ज्ञाने पापतरस्यापि मुक्तिर्भवति। इत्युक्तम्।
वेदेऽपि च गुरोः ज्ञानं लब्ध्वा मनुष्यः श्रेष्ठो भवति। सर्वपापेभ्यः पारं याति इत्युक्तम्।

यथेति = हे अर्जुन! यथा येन प्रकारेण समिद्धः शुद्धकाष्ठप्रज्वलनैः प्रवृद्धः अग्निः एधांसि काष्ठानि क्षणेन भस्मसात्कुरुते भस्ममयं विधत्ते। तथा तेनैव प्रकारेण ज्ञानाग्निः निरन्तरध्यानादिभिः प्रवृद्धः ज्ञानाग्निः सर्वकर्माणि "कर्मणो भोगैकनाश्यत्वात् पूर्वोऽनेकजन्मसंचितानि, तथा ज्ञानोत्पत्तेः पश्चात् क्रियमाणानि सर्वाणि कर्माणि भस्मसात्करोति क्षणादेव भस्मयं करोति ॥३७॥

(मू॰ गी॰) यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन!॥
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥३७॥

(वेद गी॰) प्रमातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः।
ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः ॥३॥

ऋ॰ अ॰ १.८ अध्या॰ ३ व॰ १४ मं॰ ३ ऋ॰ मं॰ १० सू॰ ७९ मं॰ ३

मूलमन्त्रः "हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन्। बृहस्पतिरभिकनिक्रदद् गा उत प्रास्तौदुच्च विद्वाँ अगायत्"॥
अथ॰ कां॰ २० सू॰ ९१ मं॰ ३ भूमिमात्राया:

प्रमातुरिति = यथा अयम् अग्निः मातुः पृथिव्याः ~~अधुर्भूमेः~~ उर्वीः बह्वीः वीरुधः लताः काष्ठानीतियावत् इच्छन् भस्मसात्कर्तुकामः ~~भ~~ तथा प्रतरं प्रकृष्टतरं गुह्यं गोप्यं तेषामेधसां मूलमपि इच्छन् भस्मसात्कर्तुकामः प्रसर्पत् प्रसर्पति। कुमारो न, कुमार इव यथा बालब्रह्मचारी ब्रह्मज्ञानाग्निना स्वकर्माणि दुग्धुकामः गुरुम् प्रसर्पत् प्रसर्पति। तथा च ससं न पक्वम् = पक्वम् ससम् अन्नमिव शुचन्तं दीप्यमानं रिपः ~~पृथिव्याः~~ पार्थिवदेहस्य उपस्थे उत्सङ्गे रिरिह्वांसं ब्रह्मज्ञानास्वादकम् अन्तः ~~[illegible]~~ मनसि अविदन्~~त~~ विन्दति लभते इति ॥३॥ ※ हंसैरिति = बृहस्पतिः सोमी जनः

कर्मबन्धनम्

तुलना = गीतायां काष्ठानि अग्निर्यथा भस्मसात्कुरुते, तथा ज्ञानाग्निः सर्वकर्माणि भस्मीकरोतीत्युक्तम्। वेदेऽपि च अग्निना काष्ठभस्मदृष्टान्तेन पक्वक्षेत्रदृष्टान्तेन च ब्रह्मज्ञानेन सर्वकर्माणि भस्मीभवन्तीत्युक्तम्।

※ सोमी जनः १९९ पार्थिवमिः मित्रस्वरूपैः समानख्यानैः हंसैः इव परमहंसैरिव वावदद्भिः ज्ञानसंलापैः अश्मन्मयानि पाषाणवत्कठोराणि नहना = नहनानि कर्मबन्धनानि व्यस्यन् विशेषरूपेण दूरीकुर्वन् अर्थात् कर्मबन्धनानि छिन्दन् गाः ज्ञानवाणीः अभिक्रनिक्रदत् साक्षात्करोति अर्थात् ब्रह्मज्ञानी जायते। अथ च विद्वान् स्वयं ज्ञानी भूत्वा प्रास्तौत् परमात्मानं स्तौति अगायत् च तद्गुणगानं करोति ॥३

नहीति= हि यस्मात्कारणात् ज्ञानेन सदृशं ज्ञानेन तुल्यं पवित्रम् पूतम् इह लोके शास्त्रे च न विद्यते नास्ति । तत् ज्ञानं कालेन महता कालेन योगसंसिद्धः कर्मयोगेन योग्यतामापन्नः स्वयमात्मनि स्वान्तःकरणे विन्दति लभते ॥ ३८ ॥

(मू. गी.) नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८

(वेद गी.) अया विष्ठा जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः ।
स प्रत्युदैद् धरुणं मध्वो अग्रं स्वया तन्वा तन्वमैरयत ॥ १ ॥

अथ. कां. ७ सू. ३ मं. १

अयेति= स हि घृणिः ज्ञानेन तेजस्वी सन् वराय श्रेष्ठाय परमात्मने उरुः प्रत्यगात्मभावेन विस्तीर्णहृदयः गातुः ज्ञान मार्गे गच्छन् अया अनया विष्ठा= वि+स्था विशेष प्रकारया ज्ञानस्थित्या कर्वराणि कर्माणि जनयन् उत्पादयन् कुर्वन्निति भावः सः एव कर्मयोगी मध्वः माधुर्यस्य अग्रं अन्तिमपरकम अग्रभागं प्रति अर्थात् मुक्तिं प्रति उदैत् उद्गच्छति । स च कर्मयोगी, स्वया स्वकीयया तन्वा सूक्ष्मशरीरेण तन्वम् सुसूक्ष्मं परमात्म शरीरं प्रति ऐरयत प्रेरयति ज्ञानी ॥ बृह. उप. अध्या. ४ ब्रा. ४ श्रु. २२ "एष भूताऽधिपतिरेष भूतपाल एष सेतुर्विधारण एषां लोकानां असंभेदाय तमेते वेदाऽनुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा",
तुलना= गीतायां ऋते ज्ञानान्न मुक्तिः", एतेन ज्ञानेन मनुष्यः मुक्तिं लभते इत्युक्तम् ।
वेदेऽपि च ज्ञानी मनुष्यः निष्काम कर्म कुरुते ज्ञानं लभते ततो मुक्तिम्" इत्युक्तम्

श्रद्धावानिति = श्रद्धावान् श्रुतिवाक्ये गुरुवचने च सत्यत्वबुद्धिः, श्रद्धा तादृशी श्रद्धा यस्यास्तीति श्रद्धावान् संयतेन्द्रियः संयतानि तत्तद्विषयेषु अप्रवर्तितानि ज्ञानकर्मेन्द्रियाणि येन सः संयतेन्द्रियः। तत्परः सर्वत्र ब्रह्माकारत्व सम्पादनपरः ब्रह्मज्ञानं लभते - प्राप्नोति। ज्ञानं ब्रह्मज्ञानं लब्ध्वा प्राप्य अचिरेण शीघ्रमेव परां निरतिशयसुखस्वरूपां शान्तिं मुक्तिम् अधिगच्छति प्राप्नोति ॥ ३९।

(मू. गी.) श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रियः।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९

(वेद. गी.) श्रद्धया सत्यमाप्यते ॥ यजुः १९। ३०. श्रद्धा प्रतिष्ठा लोकस्य देवी ..
ऋ. मं. १०. सू. १५१ यद्वा "मुग्धा देवा उत शुना यजन्तोत गोभिरङ्गैः पु-
रुधा यजन्त। य इमं यज्ञं मनसा चिकेत प्र णो वोचस्तमिहेह ब्रवः ॥ ५
अथ. कां. ७ अनु. १ सू. ५ मं. ५ ×वोच

श्रद्धयेति = श्रद्धया श्रुतिवाक्ये गुरुवाक्ये च सत्यत्वबुद्धिधारणेन सत्यं ब्रह्मज्ञानम् आप्यते प्राप्यते ॥ ३०। श्रद्धेति = श्रद्धा देवी लोकस्य जगतः प्रतिष्ठा मानकारिणी ॥ मुग्धेति = मुग्धाः श्रुतिगुरुवाक्ये श्रद्धया मोहं प्राप्ताः देवाः ज्ञानेन प्रकाशमानाः यजमानाः परब्रह्मोपासकाः उत अपि शुना = सुखाय अयजन्त ज्ञानयज्ञं कर्मयज्ञं वा कुर्वन्ति। उत अपि च गोः इन्द्रियगतामस्य अङ्गैः वृत्तिभिः मनसा वाचा कर्मणा पुरुधा बहुप्रकारैः अयजन्त ब्रह्मोपासनां कुर्वन्ति। यो विद्वान् ब्रह्मविद् यतिः इमं यज्ञं यष्टव्यं परमात्मानं मनसा शुद्धान्तःकरणेन चिकेत जानाति। तं तथाविधं ब्रह्मोपासकं यतिं नोऽस्मान् प्रवोचः प्रकर्षेण ब्रूहि। इह अत्रैव इदानीम् एव ब्रवः परमात्मस्वरूपं ब्रूहि ॥ श्रद्धया देवो देवत्वमश्नुते .. तै. ब्रा. ३। १२। ३ यद्वा "श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत् .. बृह. ४। ४। ✓ ज्ञानयज्ञे ज्ञानयज्ञेन लभ्यं वा

तुलना = गीतायाम् इन्द्रियसंयमेन गुरुशास्त्रवचनेषु श्रद्धया ज्ञानं लब्ध्वा मुक्तो भवतीत्युक्तम्।
वेदेऽपि च श्रद्धया सत्यमाप्यते, नान्यः मार्ग इत्युक्तम्।

योगेति = हे धनञ्जय। हे अर्जुन! कर्माणि शरीरयात्रामात्रैकप्रयोजनानि देहचेष्टारूपाणि कर्माणि ज्ञानं संछिन्नसंशयं। ज्ञानेन आत्मतत्त्वविवेकेन संछिन्नाः निःशेषं निर्मूलतां गताः संशयाः ज्ञानेन मोक्षः कर्मणा वा मोक्ष इत्यादिसंशयाः संदेहाः यस्य तं ज्ञानसंछिन्नसंशयम्। योगसंन्यस्तकर्माणं सर्वं ब्रह्मैव इति सर्वत्र ब्रह्ममात्रत्वदर्शनं योगः तेन संन्यस्तानि सम्यक् नितराम् अस्तानि ब्रह्मणि ब्रह्मात्मना लयं गतानि कर्माणि संचितानि आगामीनि च सर्वाणि यस्य तं योगसंन्यस्तकर्माणम् आत्मवन्तम् अप्रमत्तम् ब्रह्मविदमिति यावत्। न निबध्नन्ति बन्धनाय न कल्पन्ते ॥ ४१ ॥

(मू.गी.) योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम्।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४१ ॥

(वेदगी.) स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः।
कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात् स पितुष्पिता सत् ॥ १६ ॥
ऋ. अष्ट. २ अध्या. ३ व. १६ मं. १ (मंडल १ सू. १६४ मं. १६)

स्त्रिय इति = स्त्रियः अज्ञानाधुनादिन्यः ~~[illegible]~~ ब्रह्मज्ञानिन्यः याः सतीः सन्ति मत्वज्ञाः ब्रह्मज्ञानिनः ये सन्तीतिभावः। तान् उ = तान् जीवान् एव पुंसः पुरुषान् मह्यं जिज्ञासवे आहुः प्रतिपादयन्ति। एषा ब्रह्मदृष्टिः तान् जीवान् लौकिको तौ न बध्नाति। श्रूयते हि "त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी" इत्यादि स्त्रीत्वं पुंस्त्वञ्च उभयमपि वस्तुतः नास्तीत्युक्तं भवति। इमं भावम् अत्यन्तनिगूढम् अक्षण्वान् ज्ञानदृष्ट्युपेतेतमोऽपि कश्चित् महान् पश्यत् जानाति। अन्धः = "अन्धः कस्मात् नाऽस्मिन् ध्यानं भवति." नि. ५. १ स्थूलदृष्टिः लौकिकः पुरुषः न विचेतत् न विचेतयति न जानाति। तत्वज्ञः ज्ञानी पुत्रः वयसाऽल्पोऽपि यः कविः क्रान्तप्रज्ञो ज्ञानी स्यात्। स ईम् इमं भावम् आचिकेत जानाति। यः ज्ञानी ता = तानि स्त्रीत्वपुंस्त्वादीनि एकेनैव भावेन विजानात् औपाधिकानि जानीयात्। सः पितुः स्वोत्पादकस्यापि ज्ञानरहितस्य जनकस्य पिता असत् अस्ति। मंत्रद्रष्टुरेव पितृत्वं तत्त्ववित्त्वे पितुः पितासदिति किमाश्चर्यमित्यभिप्रायः ॥ १६ ॥ परमहंसोपनिषद्भु. २ "न शीतं न चोष्णं न सुखं न दुःखं न मानाऽवमाने च षडूर्मिवर्जम्। निन्दागर्वमत्सरदम्भदर्पेच्छाद्वेषसुखदुःखकामक्रोधलोभमोहहर्षासूयाऽहंकारादींश्च हित्वा स्ववपुः कुणपमिव दृश्यते"

तुलना = गीतायां निष्कामकर्मकर्तारः ज्ञानिनः कर्माणि न बध्नन्ति इत्युक्तम्। वेदेऽपि च लोकाः स्त्रीपुंभेदं विहाय आत्मतत्त्वं ज्ञातुं शक्नोति अल्पायुरपि ज्ञानेन वृद्धः वृद्धः जायते इत्युक्तम्

तस्मादिति = हे भारत! हे भरतकुलोत्पन्नअर्जुन! यस्मात् अज्ञानेन अयं जीवः कर्मज्ञानोभयभ्रष्टो भवति। तस्मात् कारणात् त्वम् अज्ञानसंभूतम् "अयं हन्यते अहं हन्ता" इत्यादिस्वरूपाज्ञानात् संभूतं प्रादुर्भूतम् आत्मनः स्वस्य हृत्स्थं हृदयगतं ज्ञानेन मोक्षः कर्मणा वा, अथवा इतिप्रकारकम् एनं संशयम् आत्मनाशकं संदेहं ज्ञानाऽसिना आत्मतत्त्वविवेकखड्गेन छित्त्वा भित्त्वा उत्तिष्ठ उत्थितो भव। उत्थाय च योगं कर्मयोगम् आतिष्ठ समाचर युद्धस्वेत्यर्थः ॥४२ ॥ इतिश्रीसारस्वतान्वयलैयाराम वास्तव्यभूषणोपपद जगन्नाथशास्त्रि ओ. टी. कृतायाम् गीतार्थबोधिन्याम् चतुर्थोऽध्यायः ॥४

(मू. गी.) तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥४२
इतिश्री भगवद्गीतायां चतुर्थोऽध्यायः।

(वेदगी.) यूयं धूर्षु प्रयुजो न रश्मिभिर्ज्योतिष्मन्तो न भासा व्युष्टिषु।
श्येनासो न स्वयशसो रिशादसः प्रवासो न प्रसितासः परिप्रुषः ॥५

ऋ. अष्ट. ८ अध्या. २ वर्ग. १० मं. ३. १. सू. ६६ मं. ५

यूयमिति = हे जीवात्मानः!!! यूयं धूर्षु प्रधानब्रह्मज्ञानभारेषु रश्मिभिः ज्ञानकिरणैः ज्ञानरश्मिभिः वा प्रयुजः न बद्धा इव परिप्रुषः परितो गन्तारः स्थ। तथा भासा ज्ञानाग्नितेजसा ज्योतिष्मन्तः न तेजस्वन्त इव भवथ। तथा व्युष्टिषु पदार्थविषयेषु श्येनासः न, शीघ्रगन्तार इव पराङ्मुखा भवथ। अथ च स्वयशसः रिशादसः रिशतां हिंसकानाम् इन्द्रियवृत्तीनाम् असितारः दूरे प्रक्षेप्तारः। प्रवासो न = प्रवासिन इव पथिका इव प्रसितासः ब्रह्मत्वप्राप्तये कर्मयोगाऽनुष्ठानाय च प्रसितः (?) भवथ। ५ ॥ इतिश्रीजगन्नाथशास्त्रिसंकलितायां वेदगीताटीकायां चतुर्थोऽध्यायः समाप्तः।
तुलना = गीतायां ज्ञानासिना संशयं छित्त्वा कर्मयोगे कुरुत इत्युक्तम्। वेदेऽपि च ज्ञानेन प्रकाशमानः, कामक्रोधादिशत्रून् हत्वा संसारे पथिका इव स्वं जानीत कर्मयोगमाश्रयत च इत्युक्तम्। ।

अथ भगवद्गीतापञ्चमाध्यायारंभः

"यस्य निःश्वसितं वेदः यस्य गीता वचोऽमृतम् । तत्कृपातोऽर्जुनः यातः कुरुक्षेत्रे सुदर्शनम् ॥१॥
वेदो गीता तथा गीता वेद एव न संशयः। वेदगीतापृथक्कृत्वं नो द्वयोः ब्रह्मप्रकीर्तनात् ॥२॥

अर्जुन उवाच। हे कृष्ण! कर्मणाम् अवश्यमनुष्ठेयानां कर्मणां संन्यासं त्यागं शंससि कथयसि। पुनः भूयः योगम् "कुरु कर्मैव तस्मात्त्वम्" "योगमातिष्ठ" इति च कर्मयोगं शंससि कथयसि। एतयोः कर्मसंन्यासकर्मयोगयोः यत् श्रेयः सुष्ठु अस्ति। एतयोः यत् एकं प्रशस्यतरं सुनिश्चितं भवता सुनिश्चितम्। तत् मे ब्रूहि कथय ॥१॥

(मू. गी.) संन्यासं कर्मणां कृष्ण! पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥१॥

(वेदगी.) कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ॥ ×
यजुः अध्या ४० मं. २

× (भा.) इहाऽस्मिन् संसारे कर्माणि नित्यनैमित्तिककर्माणि कुर्वन् एव शतं समाः शतवर्षाणि अधिकानि वा जिजीविषेत जीवितुमिच्छेत ॥ २॥

संन्यास इति = संन्यासः ब्रह्मणि नितराम् आसः स्थितिः यद्वा ब्रह्मणि कर्मणां फलपरित्यागेन न्यासः स्थापनं संन्यासः। कर्मयोगः कर्मकर्तृत्वे योगः, उभौ निःश्रेयसकरौ कल्याणकरौ यद्यपि स्तः। तथाऽपि तयोः कर्मसंन्यासकर्मयोगयोः कर्मसंन्यासात् कर्मपरित्यागमात्रात् कर्मयोगः श्रद्धया समनुष्ठीयमानः विशिष्यते विशेषत्वाय कल्पते ॥ २ ॥

(मू. गी.) संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ २ ॥

(वेदगी.) . . . . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . . . . . .

ज्ञेय इति = यः स्वप्रतिकूलं कर्म न द्वेष्टि तत्र अप्रीतिं न कुरुते, स्वाऽनुकूलं कर्म च न कांक्षति, कर्मजं फलं न इच्छति। निर्द्वन्द्वः = शीतोष्णसुखदुःखादिभ्यः निर्गतः अस्ति। स एव नित्यसंन्यासी नित्यं संन्यासोऽस्यैवेति ज्ञेयः ज्ञातव्यः। हे महाबाहो! हे अर्जुन! तस्मात् कर्मनिष्ठोऽपि सन् सुखम् अनायासेन बन्धात् संसारात् प्रमुच्यते मुक्तो भवति ॥ ३ ॥

(मू॰गी॰) ज्ञेयः सः नित्यसंन्यासी यो न द्वेष्टि न कांक्षति।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ॥ ३ ॥

(वैग्गी॰) कामक्रोधलोभमोहभयविषादेर्ष्येष्टवियोगाऽनिष्टसंप्रयोग
क्षुत्पिपासाजरामृत्युरोगशोकाद्यैरभिहतेऽस्मिन् शरीरे किं कामोपभोगैः मैत्रायण्यु-
पनिषद् प्रपा॰ १ मं॰ ३ अन्धोदपानस्थो भेक इवाहमस्मिन् संसारे भगवंस्त्वं
नो गतिः, भगवंस्त्वं नो गतिः,, मैत्रायण्युपनिषद् प्रपा॰ १ मं॰ ७

अर्थः = काम, क्रोधादिभिः ताडितेऽस्मिन् शरीरे कामस्य उपभोगैः किं भवति। ३ ॥ अहं संसारी जीवः अन्धोदपानस्थः अन्धकूपवासी भेक इव दर्दुर इव अस्मिन् संसारे निमग्नोऽस्मि। हे भगवन्! त्वं परमात्मा एव नः अस्माकं गतिः शरणम् असि। हे भगवन्! त्वं नः अस्माकं गतिः शरणम् असि। ७ ॥

× संख्या सम्यगात्मबुद्धिः तां वहतीति ज्ञानान्तरंगसाधनतया
सांख्यः संन्यासः

सांख्ययोगाविति= बालाः विवेकशून्याः केचित् पंडिताः सांख्ययोगौ सांख्यं ज्ञानयोगः योगः, कर्मयोगः तौ उभौ संन्यासयोगौ पृथक्
साधनतः फलतश्च भिन्नं प्रवदन्ति। न तु पण्डिताः न तु ब्रह्मविदः वदन्ति। उभयोर्मध्ये एकम् अपि ज्ञानयोगं कर्मयोगं वा सम्यक्
समनुतिष्ठन् ब्रह्मवित् मुमुक्षुः उभयोरपि मोक्षाख्यं फलं विन्दते प्राप्नोति ॥ ४ ॥ यत्सांख्यैरिति= सांख्यं ब्रह्म
तद् ये विदुः ते सांख्याः, तैः सांख्यैः ब्रह्मज्ञानिभिः यत्स्थानं मुक्तिधाम प्राप्यते लभ्यते। योगैः फलाभिसंधिरहितकर्म
कर्तृभिः अपि तत् स्थानं गम्यते प्राप्यते। यः सांख्यं ज्ञानयोगं कर्मयोगं च एकं एकस्वरूपमेव पश्यति स एव पश्यति
स एव सम्यग् दर्शी भवतीत्यर्थः ॥ ५ ॥ तथा चोपनिषत् "एकीभावेनाऽनन्यत्वेन ख्यायते प्रकाशते वस्तुरूपे अन्योति संख्या;
स्थूलसूक्ष्मकारणरूपकलप्रपंचस्य निर्विकल्पे प्रत्यगात्मनि प्रविलापने नोदिता चेतोवृत्तिस्तत् साधनभूतो यः सांख्यः सः संन्यासः ॥

(मू॰ गी॰) सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः। एकमप्यास्थितः सम्य-
ग्भयोर्विन्दते फलम् ॥ ४ ॥ यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।
एकं सांख्यं च योगं च यः पश्यति सः पश्यति ॥ ५ ॥

(वेद गी॰) विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ यजुः ४०।१४।

विद्यामिति= विद्यां ज्ञानयोगम् अविद्यां कर्मयोगं यः ब्रह्मवित् यतिः उभयं ज्ञानयोगं कर्मयोगं मोक्षसाधनकरं सह युगपदेव
वेद जानाति। सः अविद्यया कर्मयोगेन मृत्युं संसारे पुनः पुनरागतिं तीर्त्वा पारं कृत्वा विद्यया ज्ञानयोगेन अमृतम् मोक्षम्
अश्नुते प्राप्नोति। ज्ञानकर्मयोगयोः ज्ञानसंन्यासयोश्च साध्यसाधनभावागमात् ज्ञानफलम् तत्फलमेवेति सांख्य
योगयोरेकमेव फलं मोक्ष इति पण्डिताः मन्यन्ते। तस्मात् कारकादेव भेदो न तु तयोः फलतो भेद इति सिद्धम्
४

हे महाबाहो! हे अर्जुन! अयोगतः कर्मयोगस्य अकरणात् संन्यासः "ज्ञाननिष्ठालक्षणः आप्तुं लब्धुं दुःखं दुर्घटम्। ~~संन्यासः योगी~~ ~~[illegible]~~ योगयुक्तः कर्मयोगेन युक्तः मुनिः गृही यतिर्वा ब्रह्म ब्रह्मस्वरूपाऽवस्थानं चिरेण विलम्बेन न अधिगच्छति शीघ्रमेव ब्रह्मपदवीं मोक्षाख्यं धाम प्राप्नोति ॥ ६ ॥

(मू. गी.) संन्यासस्तु महाबाहो! दुःखमाप्तुमयोगतः।
योगयुक्तो मुनिर्ब्रह्म नचिरेणाऽधिगच्छति ॥ ६ ॥

(वेदगी.) सम्भूतिं च विनाशं च यस्तद्वेदोभयं सह।
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ यजुः ४०। ११

सम्भूतिमिति- संभूतिम् समस्तस्य जगतः संभवैकहेतुं परंब्रह्म विनाशं च विनाशिशरीरजन्यं विनश्वर कर्म योगी च सः योगी तदुभयं सह एकीभूतं वेद जानाति। विनाशेन विनाशिना कर्माऽनुष्ठानसाधनभूतेन विदेहस्वरूपेण शरीरेण मृत्युं तीर्त्वा विदेहमुक्तिं प्राप्य संभूत्या आत्मतत्त्वविवेकेन आत्मविज्ञानेनेतिभावः अमृतम् अमरपदं ब्रह्मधाम अश्नुते प्राप्नोति ॥ ११ ॥

योगयुक्त इति = योगयुक्तः योगेन कर्मयोगेन युक्तः कर्मयोगाऽनुष्ठाता इत्यर्थः। विशुद्धात्मा = विशुद्धः रागद्वेषादिभ्यः विमुक्तः आत्मा मनो यस्य सः विशुद्धात्मा। विजितात्मा। जितेन्द्रियः = जितानि विषयग्रहणविमुखी कृतानि इन्द्रियाणि येन स जितेन्द्रियः। विजितात्मा = विजितः निर्जितः आत्मा स्वभावो बाह्यवासनालक्षणो येन स विजितात्मा समाधिनिर्मूलितानात्मवासन इत्यर्थः। सर्वभूतात्मभूतात्मा = सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां भूतानां प्राणिनाम् आत्मभूतः स्वरूपभूतः आत्मा प्रत्यग्लक्षणः स्वात्मा यस्य सः सर्वभूतात्मभूतात्मा ब्रह्मवित् शरीरनिर्वाहनिमित्ते वैधम् अवैधं वा कर्म कुर्वन् अपि न लिप्यते कर्माकर्मोद्भवाभ्यां न श्लिष्यते इति ॥८॥

(मू. गी.) योगयुक्तः विशुद्धात्मा विजितात्मा जितेन्द्रियः
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥८॥

(वेद गी.) य आस्ते यश्च चरति यश्च पश्यति नो जनः।
तेषां संहन्मो अक्षाणि यथेदं हर्म्यं तथा ॥६

ऋ. अष्ट. ५ अध्या. ४ व. २२ मं. ६ अथ. कां. ४ अनु. १ सू. ५ मं. ५

य इति = हे जीवात्मन्! यः मुमुक्षुः कर्मयोगयुक्तः आस्ते। यश्च मुमुक्षुः शुद्धान्तःकरणः सन् चरति संसारे व्यवहरति। यश्च जनः मुमुक्षुः सर्वत्र ब्रह्मस्वरूपत्वेन व्यापकं नः = अस्मान् = नः माम् इत्यर्थे इत्यत्र वचनव्यत्ययः। नः मां पश्यति प्रत्यगात्मदृष्टित्वेन प्रवर्तते इति भावः। तेषां सर्वेषाम् अक्षाणि इन्द्रियाणि तद्वृत्तीश्च बहिः संहन्मः संहतिर्निमीलनं निमीलयामि। तानीन्द्रियाणि संसारविषयाऽभिमुखानि न भवन्तीत्यर्थः। हर्म्यं यथा प्रासादादि स्थावरवस्तुवत् निश्चलं करोमि। ते जितेन्द्रियाः भूत्वा कर्म कुर्वन्तोऽपि न लिप्यन्ते ॥ ६

नैवेति = तत्त्ववित् आत्मतत्त्वज्ञः ब्रह्मवित् युक्तः निर्विकल्पसमाधियुक्तः सन् पश्यन् जगतः वस्तूनि बहिः पश्यन्, शृण्वन् लोकानां वचांसि आकर्णयन्, स्पृशन् वस्तुनः शीतत्वमुष्णत्वं वा त्वचा जानन्, जिघ्रन् गन्धं घ्राणेन गृह्णन् सन्, अश्नन् भक्षयन्, गच्छन् = पादाभ्यां चलन् स्वपन् निद्रां कुर्वन्, श्वसन् उच्छ्वासं निःश्वासं च कुर्वन्, प्रलपन् प्रलापं कुर्वन्, विसृजन् वस्तुजातं परित्यजन्, गृह्णन् वस्तुजातम् उत्थापयन्, उन्मिषन्, उन्मेषं कुर्वन् निमिषन् चक्षुषी निमीलयन्, इत्येतत्सर्वं कुर्वन्नपि, इन्द्रियाणि चक्षुरादीनि ज्ञानेन्द्रियाणि वागादीनि कर्मेन्द्रियाणि च इन्द्रियार्थेषु शब्दादिग्रहण-वचनादिविषयेषु वर्तन्ते। नाहं श्रोता नाहं द्रष्टा, नाहं घ्रातेत्येवं विधां वृत्तिं सर्वदा धारयन् अहं किञ्चिदपि कर्म नैव करोमीत्येवं मन्येत स्वीकुर्यात् ॥ ८, ९ ॥

(मू. गी.) नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्। पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन्॥८॥ प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि। इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥

(वेदगी.) इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु। इन्द्र तानि त आ वृणे ॥१।

~~अगन्निन्द्र श्रवो बृहद्द्युम्नं दधिष्व दुष्टरम्।~~ उत ते शुष्मं तिरामसि ॥।

ऋ. अष्ट. ३ अध्या. २ व. २२ मं. १, २ ॥

इन्द्रियाणीति = हे शतक्रतो! शतशः क्रतवः कर्माणि यस्य स शतक्रतुः, तत्संबुद्धौ हे शतक्रतो! हे बहुकर्मन् जीवात्मन्! ते तव सम्बन्धीनि या = यानि इन्द्रियाणि = पञ्च ज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि इन्द्रसृष्टानि इन्द्रदत्तानि वा वीर्याणि दर्शनश्रवणादिलक्षणानि पञ्चसु ~~[illegible]~~ जनेषु मनुष्येषु असुररक्षःसु निषादपञ्चमेषु चतुर्षु वर्णेषु वर्तन्ते। हे इन्द्र! हे जीवात्मन्! ते त्वत्संबन्धीनि तानि सर्वाणि इन्द्रियाणि तद्विषयांश्च आवृणे अहं परमेश्वरः संभजेय। अर्थात् सर्वाणि इन्द्रियाणि स्वस्वविषयेषु विचरन्ति, तानि त्वद्बाधकानि न भवेयुः ॥ १ ॥ इन्द्र! हे जीवात्मन्! बृहत् ~~प्रभूतं श्रवः मुक्तिमयम् अन्नम्~~ अगन् त्वां गच्छतु। त्वं दुष्टरं दुस्तरं तरीतुमशक्यं ~~द्युम्नं द्योतमानं~~ यशः दधिष्व ~~धारय~~। ते त्वदीयं शुष्मं मुक्तिप्रापकं बलम् उत तिरामसि वर्धयामि। अगन् = गमेर्लुङि "बहुलं छन्दसीति, शपो लुक्" ~~तद्धर्मी कारतत्रूपं~~ हलङ्याब्भ्यो - "इत्यनेन तिलोपः। "मो नो धातोः" इति मप्रत्ययः अडागमश्च। दधिष्व = दधातेर्लोटि "छन्दस्युभयथा" इति धातोः आर्धधातुकत्वादिडागमः। दुष्टरम् तरतेः कृच्छ्रार्थे खल् "सुषामादित्वात् संहितायां षत्वम्। तिरामसि = तॄ प्लवनतरणयोः - लटि व्यत्ययेन शः। "ऋत इद्धातोः" इति इत्वम्। "इदन्तो मसि" ॥१॥

ब्रह्मण्येति = यः मुमुक्षुः संगं फलाकांक्षां त्यक्त्वा ब्रह्मणि सगुणब्रह्मणि कर्माणि सर्वाणि नित्यनैमित्तिककर्माणि आधाय कर्तृत्वमो कृत्वा दिकं संस्थाप्य करोति। स भक्तोऽपि अम्भसा जलेन पद्मपत्रमिव पापेन जन्मबन्धहेतुभूतेन पापजन्यफलेन न लिप्यते न श्लिष्यते ॥१०

(मू.गी.) ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः।
लिप्यते न स पापेन पद्मपत्रमिवाऽम्भसा ॥१०॥
(वेदगी.) कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ यजु.४०।२

कुर्वन्निति = यः मुमुक्षुः इह संसारे कर्माणि सर्वाणि नित्यनैमित्तिककर्माणि ब्रह्मणि आधाय कुर्वन् एव शतं समाः शतवर्ष पर्यन्तं यावदायुः पर्यवसानं वा जिजीविषेत् जीवितुम् इच्छेत्। एवं ब्रह्मार्पणकर्मकरणेन त्वयि नरे = तव मनुष्यस्य "वि भक्तिव्यत्ययः इतः अस्मात् प्रकारात् अन्यथा अन्यप्रकारेण तव मुक्तिर्नास्ति। ब्रह्मार्पणक्रियमाणं कर्म नरे मनुष्ये न लिप्यते न सम्बध्यते ॥ २ ॥

कायेनेति = योगिनः कर्मयोगिनः पुरुषाः संगं कर्मफलं त्यक्त्वा परित्यज्य कायेन शरीरेण इन्द्रियैः कर्मज्ञानोभयैः इन्द्रियैः नित्यं नैमित्तिकं कर्म बुद्ध्या निश्चित्य भगवतः विष्णोः मनसा ध्यानं श्रोत्रेण केवलेन भगवत्कथाश्रवणं, केवलेन चक्षुषा भगवन्मूर्तिदर्शनं वाचा केवलया स्वाध्यायं पठन्तो तीर्थाटनादि कर्म आत्मशुद्धये स्वशोधनायैव ईश्वरप्रीतये कुर्वन्ति ॥११॥

(मू.गी.) कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।
योगिनः कर्म कुर्वन्ति संगं त्यक्त्वात्मशुद्धये ॥११॥
(वेदगी.) दुहां मे पञ्च प्रदिशो दुहामुर्वीर्यथाबलम् ॥ प्रापेयं सर्वा आकूती
मनसा हृदयेन च ॥१॥ ~~गोसनिं वाचमुदेयं वर्चसा माभ्युदिहि।~~
~~आरुन्धां सर्वतो वायुस्त्वष्टा पोषं दधातु मे ॥२॥~~
~~अथ~~ कां. ३ अनु. ४ सू. २० मं. ९-१०.

दुहामिति = पञ्च प्रदिशः दिशावद्वर्तमानानि पञ्च इन्द्रियाणि शरीरयात्रासाधनभूतानि ज्ञानेन्द्रियाणि मे मह्यं दुहाम् = आत्मशुद्ध्यभिमतफलं दुहताम्। उर्वीः उर्व्यः षट् पञ्चकर्मेन्द्रियाणि मनश्च षट्संख्याकानि इन्द्रियाणि यथाबलं स्वशक्त्यनुसारं दुहाम् = आत्मशुद्ध्यभिमतफलं दुहतां प्रयच्छन्तु। अतश्च अहं मुमुक्षुः मनसा मनसा संकल्पविकल्पहेतुभूतया अन्तःकरणवृत्त्या हृदयेन च हृदयोपलक्षितान्तःकरणेन च सर्वाः आकूतीः सकलान् आत्मशुद्धिकरान् संकल्पान् प्रापेयं प्राप्नवानि ॥१॥ ~~अहं मुमुक्षुः गोसनिम् इन्द्रियप्रतिबद्धां वाचं वाणीम् उदेयम् उच्चारयेयम्। हे वामदेवते! त्वं वर्चसा स्वतेजसा मा माम् अभ्युदिहि उदयं प्रापय अभ्युदयं च। आत्मशुद्ध्यभिमतफलं सर्वं मां प्रापयेत्यर्थः। वायुः = वा गतिगन्धनयोः। सततमसौ गच्छतीति परमात्मा सर्वतः सर्वविषयेभ्यः आरुन्धाम् प्राणात्मना आवृणोतु। त्वष्टा परमात्मा मे मम पोषं शरीरादिपरिपालनं दधातु प्रयच्छतु ॥२॥~~

युक्त इति = युक्तः आत्मानात्मविवेकी कर्मफलं स्वेनाऽनुष्ठीयमानानां कर्मणां फलं त्यक्त्वा संत्यज्य नैष्ठिकीं कर्मनिष्ठाजन्यां शान्तिं चित्तशुद्धिम् आप्नोति लभते। अयुक्तः अविवेकी कामकारेण फलकामनया फले कर्मफले सक्तः आसक्तः सन् निबध्यते जन्मादिबन्धं प्राप्नोति॥१२।

(मू. गी.) युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्।
अयुक्तः कामकारेण फले सक्तो निबध्यते॥१२॥

(वेद गी.) . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . .

सर्वकर्माणीति = वशी सर्वेन्द्रियनियन्ता ब्रह्मवित् सर्वकर्माणि नित्यनैमित्तिकानि सर्वाणि कर्माणि मनसा संकल्पमात्रेण संन्यस्य फलादिकम् असत् इति संत्यज्य नवद्वारे चक्षुःश्रोत्रनासिकामुखपायूपस्थेति नवसंख्यात्मकं द्वारवति पुरे देहे देही जीवात्मा नैव कुर्वन् = स्वयं नैव किञ्चित् करोति। न कारयन् = नापि अन्यान् कारयतीति सुखं सुखपूर्वकमास्ते तिष्ठतीति ॥ १३ ॥

(मू. गी.) सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥

(वेदगी.) पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम्।
तस्मिन् यद् यक्षमात्मन्वत् तद् वै ब्रह्मविदो विदुः ॥ ४३ ॥
अथ. कां. १० अनु. ४ सू. ८ मं. ४३

पुण्डरीकमिति = त्रिभिः गुणेभिः सत्त्वरजस्तमोभिः त्रिभिः गुणैः आवृतम् मिलितं नवद्वारं चक्षुःश्रोत्रनासिकामुखपायूपस्थेति नवद्वारैः युक्तं पुण्डरीकं कमलात्मकं शरीरं देहिनः अस्ति। तस्मिन् नवद्वारे पुरे यत् यक्षं पूज्यम् आत्मस्वरूपम् अस्ति। यः आत्मन्वत् आत्मविवेकी आस्ते। ब्रह्मविदः ब्रह्मज्ञानिनः "वै निश्चये" तद् यक्षं पूज्यम् आत्मस्वरूपं विदुः जानन्ति ॥ ४३ ॥

न कर्तृत्वमिति=प्रभुः=प्रकर्षेण सर्वत्र भातीति प्रभुः, यद्वा "सर्वं भासयतीति प्रभुः, यद्वा "सर्वात्मना स्वयमेव भातीति प्रभुः परमात्मा लोकस्य प्राणिमात्रस्य कर्तृत्वं "त्वम् एवं कुरु-त्वम् एवं कुरु" इतिप्रवृत्तिं न सृजति न रचयति। लोकस्य प्राणिमात्रस्य कर्माणि शुभाशुभानि कर्माणि वा न सृजति। न च कर्मफलसंयोगं तत्तत्कृतपापपुण्यफलेन न संयोजयति। प्राणिनः सुखदुःखानि नाऽनुभावयतीत्यर्थः। स्वभावः पूर्वजन्मकृतप्रारब्धकर्मभिः साध्वसाधुभावः=स एव कर्तृत्वादिव्यापारेषु प्रवर्तते। कर्मरूपिणी प्रकृतिरिष्टाऽनिष्टे संपाद्य सुखदुःखे चाऽनुभावयति ॥१४॥

(मू॰गी॰) न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥१४॥

(वेदगी॰) नाहं तन्तुं विजानाम्योतुं न यं वयन्ति समरेऽतमानाः।
कस्य स्वित्पुत्र इह वक्त्वानि परो वदात्यवरेण पित्रा ॥२॥
ऋ॰ अष्ट॰ ४ अनु॰ ५ व॰ ११ मं॰ २

नाहमिति=अहं प्रभुः परमात्मा तन्तुं लोकानां कर्मतन्तून् न विजानामि न उत्पादयामि। ओतुं स्थूलरूपत्वेन फलत्वेन प्रकटीभूतानि ओतून् कर्मफलानि न विजानामि नोत्पादयामि। यं कर्मफलप्रपञ्चं समरे कर्मणां तत्फलानाञ्च संसारसंग्रामे अतमानाः सततं चेष्टमानाः संसारिणः प्राणिनः वयन्ति तेषामुपभोगार्थं स्वपूर्वजन्मकृतप्रारब्धकर्माणि ~~उत्पादयन्ति~~ गृह्णन्ति। इह अस्मिन् सम्बन्धे परः परस्तात् बुद्धेः अविषये वर्तमानानि वक्त्वानि वक्तव्यानि अर्वाचीनेन स्वजन्मोत्तरकालागतेन पित्रा पालकेन प्रारब्धकर्मणा स्वभावेन इतियावत्। ~~अनुशिष्टः~~ वर्तमानः सन् कस्य प्राणिमात्रस्य स्वित्=खलु पुत्रः ~~मनुष्यः~~ लोकः परमात्मा वदाति ~~वदेत्~~ कथयति। ईश्वरः अस्माकं कर्तृत्वं न कर्माणि न कर्मफलसंयोगं सृजति अपितु स्वभावः एव प्रवर्तते इति ॥२॥

नादत्ते इति = विभुः व्यापकोऽयमात्मा कस्यचित्पुरुषस्य सुकृतं पुण्यमं नादत्ते न गृह्णाति। अज्ञानेन आत्मतत्त्वाऽविवेकत्वहेतुना ज्ञानं वास्तविकात्मतत्त्वम् आवृतं राहुणा रविबिम्बवत् तिरोहितम् अस्ति। तेन परमात्मतत्त्वाऽविवेकेन जन्तवः जीवाः एतत्कर्म मया ईश्वरार्पणं कृतम् अनेन ईश्वरः प्रीयतेऽतो मह्यं मदभीष्टं पदार्थं दास्यतीत्येवं मुह्यन्ति मोहं प्राप्नुवन्ति ॥१५॥

(मू॰गी॰) नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥१५॥

(वेदगी॰) न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥७॥
ऋ॰अष्ट॰८ अध्या॰३ व॰१७ मं॰७

न तमिति = हे जीवात्मानः!!! तं प्रभुं न विदाथ न जानीथ। य इमा इमानि भूतानि तत्तत्कर्माऽनुकूलफलैः जजान जनयति उत्पादयति। युष्माकं सर्वेषां जीवानाम् अन्तरं भेदः अन्यत् प्रकारान्तरेण बभूव भवति विद्यते। प्रभुः पुष्करपलाशवन्निर्लेपत्वात् न पापं गृह्णाति न कस्यचित्पुण्यम्। यूयं जीवास्तु स्वशुभाऽशुभकर्मजन्यपुण्यपापफलं गृह्णन्ति। यूयं नीहारेण अज्ञानेन प्रावृताः आच्छन्नाः स्थ। अत एव जल्प्या देवोऽहं मनुष्योऽहमित्याद्यनर्थजल्पनेन प्रावृताः सन्तः असुतृपः केनाऽप्युपायेन असून् प्राणान् तृप्यन्तः उदरंभरा इत्यर्थः। उक्थशासः चरन्ति पृथिव्यां वर्तन्ते केवलमैहिकाऽऽमुष्मिकभोगपराः वर्तध्वे। अतः पुण्यपापाऽग्रहीतारं परमात्मानं न जानीथ ॥७॥

ज्ञानेनेति= येषां कर्मोपासनाप्रसक्तानां मुमुक्षूणाम् आत्मनः बुद्धेः सम्बन्धि तद् अज्ञानं सर्वानर्थबीजं मोहः ज्ञानेन आत्मपरमात्म तत्त्वविवेकेन नाशितं विध्वस्तम्। तेषां शुद्धात्मनां समुत्पन्नं तद् ज्ञानम् आदित्यवत् आदित्यः पदार्थजातमिव तत्परं परमात्मानं प्रकाशयति प्रत्यक्षीकरोति ॥ १६ ॥

(मू.गी.) ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥

(वेदगी.) मन्दमान ऋतादधि प्रजायै सखिभिरिन्द्र इषिरेभिरर्थम्।
आभिर्हि माया उप दस्युमागान्मिहः प्र तम्रा अवपत्तमांसि ॥ ५ ॥
ऋ. अष्ट. ८ अध्या. ३ व. २ मं. ५

मन्दमान इति= इन्द्रः ऐश्वर्यवान् मुमुक्षुः जीवात्मा ऋतात् सत्यस्वरूपात् ब्रह्मणः अधि इषिरेभिः ~~प्रवर्तितृभिः~~ शरीरे प्रकटीभूतैः सखिभिः समानज्ञानैः इन्द्रियैः सह मन्दमानः मोदमानः सन् प्रजायै इन्द्रियोत्पन्नायै (प्रजोत्पत्त्यै) वृत्त्यै अर्थं तत्तदिन्द्रियविषयं प्रयच्छतीति शेषः अर्थात् मुमुक्षुः इन्द्रियाऽधीनः नास्ति प्रत्युत इन्द्रियाणि तदधीनानि सन्ति। स च मुमुक्षुः आभिः ब्रह्मद्रष्ट्रीभिः आत्मज्ञानवतीभिः इन्द्रियवृत्तिभिः दस्युम् = व्यत्ययः बहुवचनस्थाने एकवचनम्। दस्यूः दुष्टविचारवतीः मायाः अज्ञानवृत्तीः विनाशयितुम् उपागात् प्राप्तवान्। स एव मुमुक्षुः तम्राः आत्मज्ञानात् ग्लापयित्रीः मिहः दुष्प्रवृत्तिमयीः वृष्टीः प्रावपत् व्यनाशयत्। तथा तमांसि अज्ञानमयान् अन्धकारान् सूर्यवत् प्रावपत् विनाशयति ॥ ५ ॥

तद्बुद्धय इति = तद्बुद्धयः तस्मिन् ब्रह्मणि बुद्धिर्येषां ते तद्बुद्धयः। तदात्मानः तद् ब्रह्म एव आत्मा अहंप्रत्ययार्थो येषां ते तदात्मानः तन्निष्ठाः तस्मिन् ब्रह्मणि एव निष्ठा स्थितिर्येषां ते तन्निष्ठाः, तत्परायणाः = तत् अद्वितीयं परं ब्रह्म एव अयनं गतिर्येषां ते तत्परायणाः सदात्मारामाः। ज्ञाननिर्धूतकल्मषाः = ज्ञानेन आत्मविवेकेन निर्धूतं निःशेषं प्रक्षालितं कल्मषं बुद्धिगतं भेदग्रहणस्वरूपं पापं येषां ते ज्ञाननिर्धूतकल्मषाः सन्तः अपुनरावृत्तिं भूयो जन्मग्रहणं पुनरावृत्तिः तदभावः अपुनरावृत्तिः तां देहसम्बन्धशून्यां मुक्तिं गच्छन्ति ॥ १८ ॥

(मू. गी.) तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥१८॥
(वेद गी.) अविन्दन् ते अतिहितं यदासीद्यज्ञस्य धाम परमं गुहा यत्।
धातुर्द्युतानात् सवितुश्च विष्णोर्भरद्वाजो बृहदा चक्रे अग्नेः ॥२॥
ऋ. अष्ट. ८ अध्या. ८ व. ३९ मं. २ यद्वा मंड. १० अनु. ११ सू. १८१ मं. २

अविन्दन्निति = यज्ञस्य "यज्ञो वै विष्णुः" तस्य यज्ञस्य पूज्यस्य विष्णोः परब्रह्मणः यत् परमं अत्युत्कृष्टं गुहा गुहास्वरूपं धाम मुक्तिगृहम् आसीत् अस्ति। तत् बृहत् साममयं महत् वा धाम द्युतानात् द्योतमानात् धातुः जगद्धारकात् जगतो धकाशं सवितुः जगदुत्पादकात्। विष्णोः सर्वत्र व्याप्नुवतः अग्नेः प्रकाशस्वरूपात् परब्रह्मणः भरद्वाजः भरतेसर्वगुणपोषकं वाजो ज्ञानलक्षणम् अन्नं यस्य स भरद्वाजः ब्रह्मज्ञानी आचक्रे करोति आहर्ति वा। तत् धाम अतिहितम् = अतिकल्याणकरम् भूयो जन्माप्रापकम् धाम मुक्तिगृहं ते ब्रह्मनिष्ठाः अविन्दन् लभन्ते "कालव्यत्ययः ॥ २ ॥"

विद्याविनयेति = विद्याविनयसम्पन्ने विद्या सर्ववेदशास्त्राऽध्ययनं ज्ञानं वा, विनयः नम्रता, ताभ्यां सम्पन्ने युक्ते, ब्राह्मणे। गवि हवि-
दिना जगत्पावन्यां धेनौ। हस्तिनि गजे, शुनि अतिनिकृष्टे कुक्कुरे जीवे। श्वपाके श्वानमपि पचतीति श्वपाकः यद्वा "श्वो
भवितव्यमिति पचतीति श्वपाकः चाण्डालः, तस्मिन् चकारः लोकोक्त पदार्थग्राहकः। पण्डिताः सर्वत्र ब्रह्मदर्शनपराः समद-
र्शिनः सर्वदैकरूपेण समरसतया तिष्ठतीति परंब्रह्म समम् इत्युच्यते। समं सर्वत्र द्रष्टुं शीलं येषां ते समदर्शिनः ॥१८

(मू॰गी॰) विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥१८॥

(वेदगी॰) सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये या।
इन्द्रं या देवी सुभगा जजान सा न ऐतु वर्चसा संविदाना ॥१॥
या हस्तिनि द्वीपिनि या हिरण्ये त्विषिरप्सु गोषु या पुरुषेषु।
इन्द्रं या देवी सुभगा जजान सा न ऐतु वर्चसा संविदाना ॥२॥
[redacted] अथ॰ कां॰ ६ अनु॰ ४ सू॰ ३८ मं॰ १, २

नूतनः मंत्रः "यद्वा कृश मे कृशामे, श्यावके कूपे इन्द्र मादयसे सचा। कण्वासस्त्वा ब्रह्मभिः स्तोमवाहस इन्द्रा यच्छन्त्या गहि", अथ॰ कां॰ २० सू॰ २० मं॰ २

सिंहे इति = या त्विषिः आत्मदीप्तिः आत्मज्योतिः सिंहे हिंसनशीले मृगेन्द्रे, व्याघ्रे शार्दूले, पृदाकौ सर्पे अग्नौ भौमाग्नौ विद्युति तथा [redacted], ब्राह्मणे ब्रह्मज्ञानविशिष्टे ब्राह्मणजातौ, सूर्ये भास्करे आस्ते विद्यते। या आत्मदीप्तिः हस्तिनि गजेन्द्रे, द्वीपिनि द्विवर्णवर्णतिचित्रके व्याघ्रे इतियावत् अस्ति। या त्विषिः आत्मदीप्तिः हिरण्ये सुवर्णादिधातौ अस्ति। या त्विषिः आत्मप्रकाशः अप्सु जलेषु, गोषु हविरादि-
ना जगत्पावन्यां धेनौ। पुरुषेषु मनुष्येषु अस्ति। या देवी द्योतमाना, सुभगा सुन्दरा त्विषिः इन्द्रं जीवात्मानं जजान = जनयामास संसाराऽवस्थायां प्रकटयामास। सा ब्रह्म [redacted] सर्वत्र [redacted]रूपा [redacted]दर्शनशक्तिः वर्चसा ब्रह्मतेजसा संविदाना संजानाना ऐकमत्यं गता नः अस्मान् मुमुक्षून् ऐतु आसमन्तात् आगच्छतु ॥१, २॥
यद्वेति = हे इन्द्र! हे ऐश्वर्यवन् परमात्मन्! तू [redacted] ... कृशे अर्थात् ब्राह्मणे कृशमे हिंसके क्षत्रिये यद्वा सिंहादौ पशौ श्यावके देशदेशान्तर[redacted] पर्यटके अर्थात् वैश्ये कूपे श्रमकर्तरि पुरुषे शूद्रे चाण्डाले वा सचा आत्मनः सम[...] भावेन मादयसे सर्वान् आत्मज्ञानिनः आनन्दयसे। स्तोमवाहसः स्तोतारः कण्वासः मेधाविनः पुरुषाः ब्रह्मभिः वेदमंत्रैः त्वा त्वां सर्वत्र व्याप्नुवन्तं त्वां परमात्मानं आयच्छन्ति
सर्वत्र [redacted]केत्वेन कर्तृत्वेन अतः आगहि हे इन्द्र! हे परमात्मन् अस्मान् समन्तात् प्राप्नुहि।

समदर्शिनाम्

इहैवेति = येषाम् आत्मविवेकिनां मनः साम्ये सममेव साम्यं तस्मिन् साम्ये समतायां स्थितं निश्चलतया तिष्ठति। तैः ब्रह्मविद्भिः इहैव जीवदवस्थायामेव सर्गः पूर्वजन्मसम्बन्धः जितः परिहृतः। हि यस्मात् कारणात् ब्रह्म निर्दोषं रागद्वेषसुखदुःखादिद्वन्द्वदोषशून्यं समं सर्वत्रैकरसम्। तस्मात् कारणात् ते ब्रह्मविदः यतयः ब्रह्मणि ब्रह्मस्वरूपे एव स्थिताः अर्थात् विदेहमुक्ताः जगति वर्तन्ते इति ॥१९
न प्रहृष्येदिति = ब्रह्मविद् यतिः यदृच्छया प्राप्तं प्रियम् अभिलषितं पदार्थं प्राप्य लब्ध्वा न प्रहृष्येत् प्रहर्षं न कुर्यात्। अप्रियं प्रतिकूलं पदार्थं प्राप्य न उद्विजेत् धैर्यं न विमुञ्चेत् दुःखी न भूयादित्यर्थः। असंमूढः समदर्शी एव स्थिरबुद्धिः स्थिरा ब्रह्माकारवृत्तिम् अत्यजन्ती बुद्धिर्यस्य स स्थिरबुद्धिः सन् ब्रह्मणि एव स्थितो भवेत् ॥२०॥

(मू. गी.) इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः। निर्दोषं हि समं ब्रह्म
तस्माद्ब्रह्मणि ते स्थिताः ॥१९॥ न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्
प्राप्य चाप्रियम्। स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः ॥२०॥
(वेदगी.) ये पुरुषे ब्रह्म विदुस्ते विदुः परमेष्ठिनम्। यो वेद परमेष्ठिनं
यश्च वेद प्रजापतिम्। ज्येष्ठं ये ब्राह्मणं विदुस्ते स्कम्भमनुसंविदुः ॥१७॥
अथ. कां. १० अनु. ४ सू. ७ मं. १७

ये इति = ये आत्मविवेकिनः पुरुषाः पुरुषे प्राणिमात्रे साम्येन वर्तमानं ब्रह्म विदुः जानन्ति। ते विदेहमुक्ताः परमेष्ठिनं परमे सर्वोत्कृष्टे पदे स्थितं परं ब्रह्म विदुः जानन्ति। यः परमेष्ठिनं परं ब्रह्म वेद जानाति। यश्च आत्मतत्त्वविवेकी प्रजापतिं स्थावरजंगमस्वामिनं परमेश्वरं सर्वत्र वेद जानाति। ये ब्राह्मणं ब्रह्मवेत्तारं तानिनं ज्येष्ठं निर्दोषत्वेन सर्वश्रेष्ठं विदुः जानन्ति। ते एव स्कम्भं सर्वाधारे सर्वसनातनं परमात्मानम् अनुसंविदुः सम्यक्तयाऽनुजानन्ति अनुशीलयन्ति च ॥१७॥

बाह्यस्पर्शेष्वित्ति=यः आत्मविवेकी बाह्यस्पर्शेषु आत्मनः बहिरिति बाह्याः इन्द्रियैः स्पृश्यन्ते गृह्यन्ते इतिस्पर्शाः, बाह्याश्च तेस्पर्शाश्च ते बाह्यस्पर्शाः तेषु बाह्यस्पर्शेषु शब्दादिषु तज्जन्यसुखेषु च असक्तः अप्रवृत्तः आत्मा मनो यस्य सोऽसक्तात्मा सन् आत्मनि स्वस्मिन् यत् सुखम् आत्मसाक्षात्कारादनुभवसुखं विन्दति लभते। स आत्मविवेकी ब्रह्मयोगयुक्तात्मा ब्रह्मणा योगो वा, ब्रह्मणि योगः ब्रह्ममात्रदर्शनं. तस्मिन् युक्तः संलग्नः आत्मा मनो यस्य स ब्रह्मयोगयुक्तात्मा ब्रह्ममात्रदर्शनपर इत्यर्थः। अक्षय्यं क्षेतुं शक्यं क्षय्यं, न क्षय्यम् अक्षय्यं विनाशरहितं सुखं ब्रह्मस्वरूपानन्दम् अश्नुते भुङ्क्ते ॥ २१ ॥

(मू. गी.) बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत् सुखम्।
स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥२१॥

(वेदगी.) ध्रुवं ज्योतिर्निहितं दृशये कं मनो जविष्ठं पतयत्स्वन्तः।
विश्वे देवाः समनसः सकेता एकं क्रतुमभिवियन्ति साधु ॥५॥
ऋ. अष्ट. ४ अध्या. ५ व. ११ मं. ५ (मं. ६ अनु. १ सू. ९ मं. २)

ध्रुवमिति= पतयत्सु गच्छत्सु जङ्गमप्राणिषु अन्तः मध्ये हृदये मनोजविष्ठं मनसोऽप्यतिशयेन वेगेन युक्तं कं सुखस्वरूपं ध्रुवं निश्चलं निर्विकल्पं ज्योतिः ब्रह्मचैतन्यं निहितं स्थितं दृशये दर्शनार्थं विश्वेदेवाः दीव्यन्तीति देवा इन्द्रियाणि विश्वे सर्वे देवाः सर्वाणि इन्द्रियाणि चक्षुरादीनि अन्तर्मुखाः सन्तः समनसः मनसा सह वर्तमानाः सकेताः सचेतस्काः सन्तः एकम् अद्वितीयं क्रतुम् अक्षय्यसुखकर्तारं परमात्मानं अभिलक्ष्य साधु सम्यक् वियन्ति विविधं गच्छन्ति। अर्थात् बाह्यवृत्तिविमुखानि अन्तर्मुखानि इन्द्रियाणि समनस्कानि अक्षय्यं ब्रह्मसुखम् अनुभवन्तीत्यर्थः ॥५॥
ब्रह्मज्ञान युक्ताः सन्तः

ये इति = हि यस्मात् ये संस्पर्शजाः इन्द्रियविषयसंस्पर्शः परस्परसंयोगः, तस्मादेव आयान्ते इति संस्पर्शजाः इन्द्रियार्थसंमिश्रणे- द्भूताः भोगाः विषयसुखानि सन्ति, ते भोगाः आद्यन्तवन्तः उत्पत्तिमन्तः, विनाशवन्तश्च। अत एव ते भोगाः दुःखयोनयः, दुःख हेतव: भवन्ति। बुधः विद्वान् यतिः तेषु दुःखयोनिमय विषयसुखेषु न रमते स्नेहं न करोति ॥२२॥

(मू. गी.) ये हि संस्पर्शजा भोगाः दुःखयोनय एव ते।
आद्यन्तवन्तः कौन्तेय! न तेषु रमते बुधः ॥२२॥

(वेदगी.) अपहत रक्षसो भङ्गुरावतः स्कभायत निर्ऋतिं सेधतामतिम्।
आ नो रयिं सर्ववीरं सुनोतन देवाव्यं भरतः श्लोकमद्रयः ॥४॥
ऋ. अष्ट. ८ अध्या. ३ व. ८ मं. ४ (मंड. १० अनु. ६ सू. ७६ मं. ४)

अपहत इति = हे अद्रयः!!! हे अविनाशिनः जीवात्मानः!!! यूयं भङ्गुरावतः आद्यन्तवतः विनश्वरान्नित्याभावत् रक्षसः रक्षो- भूतान् इन्द्रियविषयसुखानि अपहत विनाशयत। तथा निर्ऋतिम् = नियता हृतिः घृणा यत्र निर्ऋतिः नित्यघृणावतः इत्यत्र विभक्तिप्रत्ययः। नित्यघृणावतः दुःखमयान् इन्द्रियभोगान् स्कभायत दूरे परिहरत। अमतिम् = अमननशीलां कुबुद्धिं सेधत निषेधत। नः अस्मदर्थे स्वकीयार्थे सर्ववीरं सर्वैः ब्रह्मज्ञानिभिः वरणीयं रयिं ज्ञानम् आसुनोतन प्राप्नुत। तथा देवाव्यं देवानां विदुषां प्रीतिकरं श्लोकं भगवत्स्तुतिं भरत संपादयत ॥४॥

शक्नोतीति = यः मुमुक्षुः इह संसारे शरीरविमोक्षणात् देहपरित्यागात् प्राक् एव पूर्वमेव कामक्रोधोद्भवं कामः अभिलाषः क्रोधः मनःक्षोभको द्वेषपरिणामः कोपः, ताभ्याम् उद्भवः उत्पत्तिः यस्य तं कामक्रोधोद्भवं वेगं प्रवाहं सोढुम् शमयितुम् कामक्रोधजयेन शान्तः दान्तः भवितुमित्यर्थः। शक्नोति समर्थो भवति। सः मुमुक्षुः युक्तः ब्रह्मयोगयुक्त एव भवति। सः नरः एव सुखी ब्रह्मानन्दोपभोगेन सुखयुक्तः भवति ॥२३॥

(मू.गी.) शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात्।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥२३॥
(वेदगी.) त आदित्यास उरवो गभीरा अदब्धासो दिप्सन्तो भूर्यक्षाः।
अन्तः पश्यन्ति वृजिनोत साधु सर्वं राजभ्यः परमा चिदन्ति ॥३॥
ऋ. अष्ट.२ अध्या.७ व.८ मं.३ (मंड.२ अनु.३ सू.२७ मं.३)

त आदित्यास इति = ये अदब्धासः कामक्रोधप्रभृतिभिः शत्रुभिः अहिंसिताः कामक्रोधादिवेगसोढार इत्यर्थः। दिप्सन्तः कामक्रोधप्रभृतीन् शत्रून् दंभितुम् हिंसितुम् इच्छन्तः मुमुक्षवः जनाः अन्तः शरीरमध्ये एव वृजिना वृजिनानि पापानि दुःखानि पश्यन्ति अवलोकयन्ति जानन्तीत्यर्थः। ते आदित्यासः आदित्यवत्तेजस्विनः सन्तः उरवः महान्तः गभीराः कामक्रोधादिसोढृत्वेन गांभीर्योपेताः सर्वं वस्तुमात्रं साधु समीचीनं सुखस्वरूपं पश्यन्ति जानन्ति। उत अपि च ते परमा परमाणि दूरदेशाऽवस्थितानि अपि सर्वाणि वस्तूनि चित् = एव, राजभ्यः प्रकाशमानस्य ज्योतिःस्वरूपस्य ईश्वरस्य "विभक्तिव्यत्ययः"। अन्ति अन्तिके समीपे वर्तन्ते इति शेषः। दिप्सन्तः इति = "दंभु दंभे, अस्मादिच्छायां सनि" "सनीवन्तर्धेतीड्विकल्पे" इति इडभावपक्षे "दंभ इच्च" इतीकारः। "दंभे हल्ग्रहणस्य जातिवाचकत्वात् सिद्धमिति। सनः किते अनुनासिकलोपः॥३

योन्त इति=यः ब्रह्मवित् अन्तःसुखः अन्तः आत्मनि एव निष्कारणं सुखं यस्य सः अन्तःसुखः एव। यः अन्तरारामः=अन्तः आत्मनि एव
आरामः रमणं क्रीडनं यस्य सः अन्तरारामः। यः अन्तर्ज्योतिः अन्तर्लीनं ज्योतिः मनो यस्य सः अन्तर्ज्योतिः अस्ति। सः योगी ब्रह्म
योगयुक्तः ब्रह्मभूतः त्यक्तदेहात्मभावः सन् ब्रह्मनिर्वाणं ब्रह्मणः निर्वाणं विदेहमुक्तिम् अधिगच्छति प्राप्नोति ॥ २४॥

(मू॰गी॰) योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥२४॥
(वेदगी॰) प्र ये दिवः पृथिव्या न बर्हणा त्मना रिरिच्रे अभ्रान्न सूर्यः।
पाजस्वन्तो न वीराः पनस्यवो रिशादसो न मर्या अभिद्यवः ॥३॥
ऋ॰ अष्ट॰ ८ अध्या॰ २ व॰ १॰ मं॰ ३ (मंड॰ १॰ अनु॰ ६ सू॰ ७७ मं॰ ३)

प्रये इति=ये दिवः दिवि "विभक्तिव्यत्ययः" हृदयाकाशे प्ररिरिच्रे=प्ररिरेचिरे प्रकर्षेण सम्प्रक्ताः भवन्ति, न तु हृदयाकाशे दूहि देशे।
ये न=ये च "च न इति" इति चार्थे। पृथिव्याः पृथिव्यां विभक्तिव्यत्ययः पृथिवीविकारे देहे प्ररिरिच्रे=प्ररिरिचिरे=प्रकर्षेण
वियुक्ता भवन्ति।"रिचिर् धातुः सम्पर्के वियोगे च।। ये च बर्हणा महत्त्वेन त्मना आत्मनैव अभ्रात् मेघात् विमुक्तः सूर्यः न
सूर्य इव। पाजस्वन्तः बलवन्तः वीरा न वीरा इव पनस्यवः स्तुतिकामाः रिशादसः रिशतां हिंसताम् असितारः दूरे
प्रक्षेप्तारः मर्या न मनुष्या इव युक्ताः सन्तः अभिद्यवः अभिगतदीप्तयः ज्योतिर्मया विदेहमुक्ता भवन्ति ॥३॥

लभन्ते इति = यतात्मानः यतः संयमितः स्ववशीकृतः आत्मा मनो यैः, ते यतात्मानः। सर्वभूतहिते रताः सर्वेषां भूतानां पदार्थमात्राणाम् हिते प्रिये रताः संलग्नाः ये ऋषयः ब्रह्मध्यानाऽभिमुखगन्तारः, क्षीणकल्मषाः क्षीणं निःशेषत्वेन क्षयं गतं कल्मषं वासनापापं येषां ते क्षीणकल्मषाः। छिन्नद्वैधाः। अर्थस्य द्वैविध्यम् अवलम्ब्य जायन्ते इति द्वैधाः संशयाः। छिन्ना विनाशं गताः द्वैधाः संशयाः येषां ते छिन्नद्वैधाः सन्तः ब्रह्मनिर्वाणं विदेहकैवल्यं लभन्ते प्राप्नुवन्ति ॥ २५ ॥

(मू. गी.) लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥

(वेदगी.) हंसा इव श्रेणिशो यतानाः शुक्रा वसानाः स्वरवो न आगुः*।
उन्नीयमानाः कविभिः पुरस्ताद् देवा देवानामपि यन्ति पाथः ॥ ९ ॥
ऋ. अष्ट. ३ अध्या. १ व. ४ मं. ९ (मंड. ३ अनु. १ सू. ८ मं. ९)

(नः) अस्माकं सहवासिनः जीवात्मानः अस्मत्संमुखे एव (शुक्राः) पापराहित्यात् शुद्धा मानः सन्तः (वसानाः) पापानि आच्छादयन्तः अर्थात् पापानि हंसा इव = ~~शुक्राः शुक्लानि दीप्तानि सत्त्वगुणविशिष्टानि कर्माणि वसानाः आच्छादयन्तः कुर्वन्त इत्यर्थः। स्वरवः = स्वरुः यज्ञो भवति, तद्वन्तः इन्द्रियसंयमयत्नकर्तारः~~। श्रेणिशः श्रेणिबद्धाः हंसा इव यतानाः यथानियमं यत्नं कुर्वाणाः। यथानियमं ज्ञानमार्गे प्रवर्तमानाः ~~हंसा परमहंसा एव नः अस्माकं संमुखे पम~~ आगुः सर्वतः प्राप्नुवन्ति। ते कविभिः क्रान्तदर्शिभिः ब्रह्मज्ञानिभिः पुरस्तात् ब्रह्मनिर्माणप्रापितः पूर्वम् उन्नीयमानाः ब्रह्मज्ञानं प्रति उन्नतिं लभमानाः देवाः वेदार्थदर्शिनः ऋषयः देवानां पाथः देवानां स्थानम् अन्तरिक्षे शरीरविमोचनात् पूर्वं वा मुक्तिधाम अपियन्ति ~~प्राप्नुवन्ति~~ अभिगच्छन्ति ॥ ९ ॥

*: यतानः = इन्द्रियनियमने यत्नं कुर्वन्तः स्वरवः = स्वरुः यज्ञो भवति यज्ञात्मकं परमात्मानं स्मरन्तः

कामक्रोधेति = कामः वासना, क्रोधः कोपः, ताभ्यां वियुक्तानां विरहितानां यतीनां मुमुक्षूणां यतचेतसां यतं नियमेन अन्तर्मुखत्वेन स्थापितं चेतः मनो येषां, ते यतचेतसः, तेषां यतचेतसां विदितात्मनां विदितः सर्वात्मकत्वेन ज्ञातः आत्मा परमात्मा यैः, ते विदितात्मानः तेषां विदितात्मनां सम्यग्विदितात्मतत्त्वानाम् अभितः उभयतः जीवद्दशायां विदेहदशायां च ब्रह्मनिर्वाणं ब्रह्मानन्दोऽवाप्तिः वर्तते उपतिष्ठते ॥२६॥

(मू. गी.) कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥२६॥

(वेद गी.) ब्राह्मणासः सोमिनो वाचमक्रत ब्रह्म कृण्वन्तः परिवत्सरीणम् ।
अध्वर्यवो घर्मिणः सिष्विदाना आविर्भवन्ति गुह्या न के चित् ॥८॥
ऋ. अष्ट. ५ अध्या. ७ व. ४ मं. ८ (मं. ७ अनु. ६ सू. १०३ मं. ८)

ब्राह्मणास इति = सोमिनः = सोमः आत्मा स विद्यतेऽस्मिन्निति सोमिनः सोमज्ञानविशिष्टाः विदितात्मानः। घर्मिणः = घर्मः यज्ञः तेन घर्मेण यतेन्द्रियत्वेन यज्ञेन विचरन्तः, यतचेतस इत्यर्थः। अध्वर्यवः = ध्वरः हिंसा, न ध्वर [redacted] हिंसा यत्र तत्कर्म अध्वरम् कामक्रोधादिजनितहिंसारहितं कर्म इच्छतीति अध्वर्युः कामक्रोधात्मकहिंसारहिताः, ते अध्वर्यवः कामक्रोधवियुक्ताः। यद्वा अध्वानं सत्पथं रातीति अध्वरः। रा दाने इति धातोः कप्रत्ययः [redacted] अध्वरः यज्ञः। यद्वा न ध्वरति कुटिला न भवति ध्वृ + अच् नञ्तत्पुरुषः। सिष्विदाः = कामक्रोधादीन् विमुञ्चन्तः ब्राह्मणासः ब्रह्मज्ञानिनः यतयः, ब्रह्म कृण्वन्तः ब्रह्मज्ञानं कृण्वन्तः कुर्वन्तः लभमाना इतियावत् सर्वत्र वस्तुमात्रं ब्रह्म कुर्वन्तः ब्रह्म कीर्तयन्तः, परिवत्सरीणं परिवत्सरः ब्रह्म, तत्सम्बन्धि परिवत्सरसम्बन्धि ब्रह्मसम्बन्धि ब्रह्ममयमित्यर्थः वाचं भाषणम् अक्रत कुर्वन्ति। तेषु के सुखमयाः ब्रह्मज्ञानिनः [redacted] यतयः चित् = एव, न = अपि "नकारोऽप्यर्थकोऽत्र" गुह्या गुह्यं स्थानं ब्रह्मनिर्वाणम् आविर्भवन्ति प्राप्नुवन्तीति ॥८॥

स्पर्शानिति = बहिर्भवाः बाह्याः, तान् बाह्यान् बहिर्भूतान् स्पर्शान् रूपरसादिविषयान् बहिः कृत्वा बहिर्देशे विधाय। भ्रुवोः अन्तरे मध्ये चक्षुः दृष्टिं कृत्वा संस्थाप्य। नासाऽभ्यन्तरचारिणौ नासिकामध्यगमनशीलौ प्राणापानौ प्राणापानवायू समौ एकरसौ कृत्वा केवलं प्राणायामं कृत्वा मुनिः ब्रह्ममननशीलः। यतेन्द्रियमनोबुद्धिः = यताः स्वायत्तीकृताः इन्द्रियाणि मनश्च बुद्धिश्च येन स यतेन्द्रियमनोबुद्धिः। विगतेच्छाभयक्रोधः = विगताः दूरीभूताः इच्छा कामः भयञ्च त्रासश्च क्रोधश्च कोपश्च यस्य सः विगतेच्छाभयक्रोधः सन् मोक्षपरायणः तीव्रमोक्षेच्छया मोक्षसाधनैकनिष्ठः यः सदा सर्वदा भवति। स एव मुनिः मुक्तो जीवन-काले जीवन्मुक्तः मरणानन्तरं कैवल्यमुक्तः नान्यः कश्चित् इति ॥२७, २८॥

(वेदगी॰) स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः। प्राणापानौ समौ कृत्वा नासाऽभ्यन्तरचारिणौ ॥२७॥ यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः। विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥२८॥

(वेदगी॰) संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः। वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ॥ ऋ॰ अ॰ ५ अध्या॰ ७ व॰ ३ मं॰ १ (मंड॰ ७ अनु॰ ६ सू॰ १०३)

x (1) प्रजानन्तः प्रति गृह्णन्तु पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम्। दिवं गच्छ प्रति तिष्ठा शरीरैः स्वर्गं याहि पथिभिर्देवयानैः ॥ अथ॰ कां॰ २ सू॰ ३४ मं॰ ५

x संवत्सरमिति = मण्डूकाः = नित्यं [illegible] मोदमानाः ब्रह्मज्ञानेन मोदितकर्माणः। मदते रूपम्। यद्वा तद्विक्रमोणः मन्दते रूपम् आत्मज्ञानेन नित्यं तृप्ताः वा। यद्वा मण्डयतेः मण्डूका भवति। ते हि भक्तिभिः नानाविचित्राभिः विधात्रा मण्डिता भवन्ति इति। मण्डूकाः भगवद्भक्तितृप्ताः मुमुक्षवः पर्जन्यजिन्वितां पर्जन्येन देवेन जिन्वितां प्रीतां देवप्रीतिरूपां वाचं वाणीं प्रावादिषुः = प्रवदन्ति। एवम्भूतास्ते ~~विगतेच्छाभयक्रोधाः~~ मोक्षपरायणा भगवद्भक्ती व्रतचारिणः बहिर्भूतरूपरसप्रभृत्यग्रहणरूपं व्रतम् आचरन्तः कृतेन्द्रियसंयमाः ब्राह्मणा ब्रह्मवेत्तारः संवत्सरं = संवसन्ति अस्मिन् भूतानि इति संवत्सरः परमात्मा तस्मिन् संवत्सरे परमात्मनि "संवत्सरमित्यत्र सप्तमीस्थाने द्वितीयाविभक्तिव्यत्ययः"; शशयानाः शयनं कुर्वन्तः सन्तः मुक्ताः भवन्तीति ॥ १ ॥ प्रजानन्त इति = पूर्वे सर्वेभ्यः प्रथमाः प्रजानन्तः = प्रकर्षेण प्राणायामविधिं जानन्तः ज्ञानिनः पुरुषाः (परि+आ+चरन्तम्) शरीरस्य सर्वेषु स्थानेषु भ्रममाणं (प्राणम्) प्राणवायुम् अङ्गेभ्यः सर्वेभ्यः अवयवेभ्यः एकत्रीकृत्य प्रतिगृह्णन्तु = स्वायत्ती कुर्वन्तु। शरीरैः प्राणवायोः अवरोधे कृतेऽपि शरीरस्थैः स्थूलसूक्ष्मकारणरूपैः शरीरैः तदवयवैश्च प्रतितिष्ठ = प्रकर्षेण स्थितो भव, तव शरीरमपि मा पतेत्। देवयानैः देवैः योगिभिः यानैः गन्तव्यैः मार्गैः स्वर्गं दुःखासंभिन्नं सुखात्मकं लोकं याहि ~~प्राप्नुहि~~ गच्छ पुनः दिवं सर्वोपरिप्रकाशमानं [illegible] मुक्तिधाम गच्छ प्राप्नुहि ॥ ५ ॥

भोक्तारमिति॰ यतिः यज्ञतपसां यज्ञानां श्रौतस्मार्तानां यज्ञानां ब्रह्मज्ञानयज्ञानां वा तपसां सत्याचरणादीनां भोक्तारं पालयितारं सर्वभूतानां सर्वेषां प्राणिमात्राणां सुहृदं सुशोभनं हृत् हृदयं यस्य तथाभूतं सर्वलोकमहेश्वरं लोक्यन्ते इतिलोकाः सर्वे च लोकाश्च सर्वलोकाः अव्यक्तादिस्थूलान्ताः तेभ्यो महान् महत्तमः। स्वसन्निधिमात्रेण सर्वम् इष्टे चेष्टयतीति ईश्वरः महांश्चासौ ईश्वरः महेश्वरः तं सर्वलोकमहेश्वरं सच्चिदानन्दस्वरूपं मां परमात्मानं श्रीकृष्णं ज्ञात्वा अवबुध्य शान्तिं सर्वसंसारोपशमं ब्रह्मभावं विदेहमुक्तिम् ऋच्छति प्राप्नोति ॥२९॥ इतिश्री जगन्नाथशास्त्रिसंकलितायां गीतावेदार्थबोधिन्यां पञ्चमोऽध्यायः समाप्तः ॥५॥

(मू॰ गी॰) भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां
ज्ञात्वा मां शान्तिमृच्छति ॥२९॥ इति श्रीमद्भग॰ गी॰ ५ मोऽध्यायः

(वेदगी॰) कविमग्निमुपस्तुहि सत्यधर्माणमध्वरे। देवममीवचातनम् ॥
साम॰ पूर्वार्द्धे ऋ॰ अ॰ १ अध्या॰ १ ख॰ २३ मं॰ १

कविमिति। हे स्तोतृसंघ! अध्वरे सर्वविधे यज्ञकर्मणि कविं क्रान्तदर्शिनं महेश्वरत्वेन सर्वलोकद्रष्टारम्। अमीवचातनम् अमीवानां कामक्रोधादिहिंसकरोगाणां कामक्रोधादिहिंस्रशत्रूणां वा चातनं नाशकं सर्वभूतसुहृदं सत्यधर्माणं सत्यं धर्मो यस्येति सत्यधर्मा "धर्मादनिच् केवलात्" पा॰ ५ अध्या॰ ४ पा॰ २४ सू॰ तं सत्यधर्माणं सत्यधर्मस्वरूपं देवं द्योतमानं परमात्मानं ज्ञात्वा उपस्तुहि आत्मतत्त्वपरिज्ञानेन उपेत्य स्तुतिं कुरु। परमात्मस्तुत्या शान्तिम् आप्नुहि इत्यर्थः। अमीवचातनम्॰ अम, रोगे इत्यस्मात् शेवयह्वजिह्वाग्रीवाप्वामीवाः —" उणादि॰ १।१५२ इति वन्प्रत्ययः ईडागमे च निपातितः। चते चदे याचने इत्येतस्माद्धिंसार्थात् ण्यन्तान्नन्द्यादित्वात् ल्युः" पा॰ ३।१।१३४ योरनादेशः "णेरनिटि" इति णिलोपः। अमीवानां चातनम् इति तत्पुरुषसमासः ॥१॥ इतिश्री सारस्वतान्वयलैसागग्रामवास्तव्य न्यायभूषणोपपदजगन्नाथशास्त्रि ओ॰ टीकृतायां वेदगीतार्थबोधिन्यां पञ्चमोऽध्यायः समाप्तः।

अथ षष्ठोऽध्यायारंभः ॥

"यस्य निःश्वसितं वेदाः यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनः यातः कुरुक्षेत्रे प्रदर्शनम् ॥ १ ॥

"वेदो गीता तथा गीता वेद एव न संशयः। वेदगीतापृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात् ॥ २ ॥

अनाश्रित इति= यः मुमुक्षुः कर्मफलं ज्योतिष्टोमपुत्रेष्ट्यादियज्ञानां कर्मणां स्वर्गपुत्रादिलब्धिफलम् अनाश्रितः आश्रयम् अप्राप्तः निष्कामः सन् कार्यं नियमपूर्वककर्तव्यं कर्म ब्रह्मयज्ञादिकं कर्म श्रद्धया करोति अनुतिष्ठति। स यतिः एव संन्यासी कर्मफलपरित्यागात् सम्यक् त्यागी भवति। स च योगी कर्मयोगसमाहितचित्तत्वात् योगी भवति। *न च अक्रियः संध्योपासनादिनित्यनैमित्तिककर्मपरित्यागात् योगी भवति। १ ॥

*न निरग्निः= श्रौतस्मार्ताग्नित्यागकर्ता संन्यासी न भवति

(मू॰ गी॰) अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।
स संन्यासी च योगी च, न निरग्निर्न चाक्रियः ॥ १ ॥

(वेदगी॰) तमेव ऋषिं तमु ब्रह्माणमाहुर्यज्ञन्यं सामगामुक्थशासम्।
स शुक्रस्य तन्वो वेद तिस्रो यः प्रथमो दक्षिणया रराध ॥ ६ ॥
ऋ॰ अ॰ ८ अध्या॰ ६ व॰ ४ मं॰ १ (मं॰ १० अनु॰ ९ सू॰ १०७ मं॰ ६)

तमेवेति= यः प्रथमः मुख्यः प्रधानभूतः दक्षिणया पटुतया दक्षिणाप्रदानेन वा ब्रह्मयज्ञाद्युपूर्त्यै रराध परंब्रह्म आराधयति न तु स्वर्गादिपदार्थान् आराधयति। सः शुक्रस्य ज्योतिःस्वरूपस्य परमात्मनः तिस्रः त्रिसंख्याकाः मिताः तन्वः आध्यात्मिकाऽऽधिभौतिकाऽऽधिदैविकस्वरूपाणि शरीराणि वेद जानाति। तं ब्रह्मविदं जनम् एव ऋषिम् निष्कामकर्मकरणेन अतीन्द्रियार्थदर्शिनं योगिनम् आहुः कथयन्ति। तमु तम् एव ब्रह्माणं ब्रह्मज्ञातारम् आहुः कथयन्ति। तमेव यज्ञन्यम्= यज्ञस्य निष्कामकर्मयज्ञस्य नेतारम् आहुः। तमेव सामगाम् सामवेदस्य गातारम् आहुः कथयन्ति। तमु तमेव उक्थशासम् उक्थानि सामवेदाऽवयवान् शंसतीति उक्थशासम् जीवन्मुक्तिमहाव्रतधारकम् आहुः कथयन्ति ॥ ६ ॥

यमितिः हे पाण्डव! हे पाण्डुपुत्र! अर्जुन! यं कर्मफलत्यागलक्षणं धर्मं संन्यासं प्राहुः वदन्ति। त्वं तमेव योगं कर्मयोगं विद्धि जानीहि। इति निश्चये। असंन्यस्तसंकल्पः अपरित्यागवासनः कश्चित् ब्राह्मणो वा यतिर्वाऽन्यो वा योगी कर्मफलाकांक्षाराहित्येन शुद्धचित्तः न भवति ॥ २ ॥

(मू. गी.) यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥

(वेदगी.) . . . . . . . . . . . . . . . .
. . . . . . . . . . . . . .

आरुरुक्षोरिति = योगं कर्मफलनिरपेक्षत्वेन चित्तशुद्धिरूपं कर्मयोगम् आरुरुक्षोः मुक्तिप्राप्त्यै ज्ञानयोगं प्राप्तुम् इच्छोः मुनेः मननशीलस्य गृहस्थस्य कर्म निष्कामकर्मयोगः एव कारणं हेतुः उच्यते। योगारूढस्य योगं ज्ञानयोगम् आरूढस्य संप्राप्तवतः तस्यैव गृहस्थस्य यतेः शमः बाह्यविषयोपरतिरेव कारणं हेतुः उच्यते ॥ ३ ॥

(मू० गी०) आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥

(वेदगी०) . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . .

यदेति = हीति निश्चये। यदा यस्मिन् काले यतिः इन्द्रियार्थेषु इन्द्रियाणां चक्षुरादीनाम् अर्थेषु शब्दादिविषयेषु न अनुषज्जते असक्तिं न करोति। सर्वसंकल्पसंन्यासी सर्वे संकल्पाः सर्वसंकल्पाः सर्वविषयाः तान् संन्यसितुं शीलमस्यास्तीति सर्वसंकल्पसंन्यासी तदा तस्मिन् काले योगारूढः योगं ज्ञानयोगम् आरूढः प्राप्तः स्थितप्रज्ञः जीवन्मुक्त इति विद्वद्भिः उच्यते कथ्यते॥४॥

(मू. गी.) यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते॥४॥

(वेद गी.) जज्ञान एव व्यबाधत स्पृधः प्रापश्यद्वीरो अभि पौंस्यं रणम्।
अवृश्चदद्रिमव सस्यदः सृजदस्तभ्नान्नाकं स्वपस्यया पृथुम्॥४॥

ऋ. अ. १. अध्या. ६ व. १४ मं. ४ (मं. १. अनु. १०. सू. ११२ मं. ४)

जज्ञानेति = स जीवात्मा ब्रह्मविद् यतिः जज्ञानः ब्रह्मज्ञानप्राप्त्यै ~~जायमान~~ प्रयत्नं कुर्वाणः एव, स्पृधः इन्द्रियार्थान् शत्रून् व्यबाधत अत्यर्थं पीडयति। वशीकरोति व्यबाधत लडर्थे लङ्। अर्थात् इन्द्रियविषयविमुखो भवतीत्यर्थः। वीरः इन्द्रियार्थजये समर्थः स एव ब्रह्मविद् यतिः रणं प्रापञ्चिकं संग्रामम् अभिलक्ष्य पौंस्यं कर्मफलास्वर्गादिलभ्याकांक्षारहितम् आत्मीयं बलं प्रापश्यत् प्रकर्षेण पश्यति ~~जानाति~~ लडर्थे लङ् लकारः। अद्रिम् अदरणशीलं ~~कठिनतरं~~ प्रकाशितया वृद्धिं गच्छन्तं चित्तम् अव वृश्चत् छिनत्ति मनोनिरोधं करोतीत्यर्थः। अव वृश्चत् = वृश्चति, इत्यत्र लडर्थे लङ् लकारः। सस्यदः प्रस्रवणशीलान् ज्ञानरसप्रवाहान् अवसृजत् अवसृजति ~~निर्गमयति~~ उत्पादयति। योगारूढो भवतीत्यर्थः। अवसृजत् = अवसृजतीत्यत्र लडर्थे लङ् लकारः। तथा स एव ब्रह्मविद् यतिः स्वपस्यया मुक्तिप्राप्तिकारकशोभनकर्मेच्छया पृथुं महान्तं नाकं मुक्तिधाम अस्तभ्नात् स्तभ्नाति स्वस्मै मुक्तिधामप्राप्तिनिमित्तं निरुद्धं करोति अर्थात् एवंविधः जीवात्मा स्थितप्रज्ञः सन् योगारूढः सन् मुक्तिधाम प्राप्नोति। अस्तभ्नात् स्तभ्नाति लडर्थे लङ् लकारः। जज्ञानः = "जनी प्रादुर्भावे" छान्दसस्य लिटः कानच्। सस्यदः स्यन्दू प्रस्रवणे क्विप्, "शासि नलोपः॥ ४॥

उद्धरेदिति= अयं जीवात्मा मुमुक्षुः संसारार्णवमग्नम् आत्मानम् आत्मना लोभमोहादिपरित्यागपूर्वकं भगवन्नामस्मरणशीलेन आत्मज्ञानेन उद्धरेत् संसारसागरात् आत्मनः उद्धरणं कुर्यात्। आत्मानम् अविद्याऽस्मितादिभिः न अवसादयेत् न विनाशयेत्। आत्मा स्वस्य आत्मना ध्यानध्यानादिसत्कर्मविधानेन बन्धुः संसारदुःखार्णवतारकः। आत्मनः स्वस्य आत्मना कामक्रोधादिदुष्कर्मविधानेन रिपुः शत्रुः एव ॥५॥

(मू० गी०) उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत्।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥५॥

(वेदगी०) यो३स्मान् द्वेष्टि तमात्मा द्वेष्टु यं वयं द्विष्मः स आत्मानं द्वेष्टु ॥५॥
निर्द्विषन्तं दिवो निः पृथिव्या निरन्तरिक्षाद् भजाम ॥६॥
अथ० कां० १६ अनु० २ सू० ८ मं० ५, ६ ॥

यं इति= यः जीवात्मा अस्मान् जीवात्मनः द्वेष्टि द्वेषं विधत्ते, प्रत्युत जीवात्मनः न उद्धरेत्। तं जीवात्माऽनुद्धारकर्तारम् आत्मा स्वयमेव द्वेष्टि द्वेषं करोति। वयं संसारसागरमग्नाः यम् आत्मज्ञानप्रवृत्तिकारकम् आत्मानं द्विष्मः द्वेषं कुर्मः। सः अपि आत्मानं द्वेष्टु द्वेष्टि द्वेषं करोति लडर्थे लोट् ॥५॥ निर्द्विषन्तमिति= निर्द्विषन्तम् स्वात्माऽनुकूलम् आचरन्तं निष्पृथिव्याः संसारात् बहिः, निरन्तरिक्षात् अन्तरिक्षलोकात् बहिः दिवः= दिवि" इत्यत्र विभक्तिव्यत्ययः। मुक्तिधाम्नि भजाम सेवामहे पश्यामेति भावः ॥६॥

बन्धुरिति = येन विज्ञातात्मतत्त्वेन आत्मना आत्मा रागद्वेषादीन् तिरस्कृत्य कार्यकारणसंघात एव जितः निर्जितः। तस्य आत्मनः आत्मा कार्यकारणसंघातजेता बन्धुः अतिशयेन मोक्षसुखेन बध्नातीति बन्धुः संसारदुःखार्णवपारकारकः भवति। अनात्मनः आत्मज्ञानरहितस्य सांसारिकजीवात्मनः तु शत्रुत्वे समाधिप्रतिरोधके सति आत्मा संसारार्णवमनस्य आत्मनः शत्रुवत् भवति ॥ ६ ॥

(मू॰गी॰) बन्धुरात्माऽऽत्मनस्तस्य येनात्मैवात्मना जितः।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥

(वेदगी॰) आत्मा यज्ञस्य रंह्या सुष्वाणः पवते सुतः।
प्रत्नं नि पाति काव्यम् ॥ ८ ॥ ऋ॰ अ॰ ६ अध्या॰ ८ व॰ २८ मं॰ ८ (मं॰ ९ अनु॰ १ सू॰ ६ मं॰ ८)

आत्मेति = यज्ञस्य यज्ञकर्तुः देवपूजाकर्तुः विष्णुध्यानपरस्य, यद्वा यज्ञस्य आत्मभिः सह संगतिकर्तुः मुमुक्षोः आत्मा रंह्या वेगेन अतिशयेनेतियावत् सुष्वाणः संसारार्णवपारोल्लंघनमयान् कामान् प्रेरयन् पवते संसारमलात् पुनाति। अथ च सुतः ब्रह्मज्ञानाय सम्बद्धः सन् प्रत्नं पुरातनं सृष्ट्यादौ वर्तमानं सनातनं काव्यं क्रान्तदर्शित्वं ब्रह्मज्ञानत्वम् निपाति अभिरक्षतीति ॥ ८ ॥

जितात्मन इति = जितात्मनः जितः निर्जितः वशीकृतः समाधिना मनो येन स जितात्मा, तस्य जितात्मनः वशीकृतचित्तस्य। प्रशान्तस्य विकल्परहितस्य मुमुक्षोः परमात्मा परंब्रह्म समाहितः सम्यक् आहितः अन्तर्बहिः सर्वत्र ब्रह्मस्वरूपाऽवभासो भवति। ज्ञानविज्ञानतृप्तात्मा ज्ञानं शास्त्राऽवबोधः विज्ञानं परमात्मसाक्षात्कारज्ञानं ताभ्यां तृप्तः पूर्णः विकल्पाऽन्तराऽवकाशशून्यः आत्मा मनो यस्य स ज्ञानविज्ञानतृप्तात्मा, विजितेन्द्रियः = विशिष्य जितानि विषयग्रहणवैमुख्यं गमितानि इन्द्रियाणि बाह्याभ्यन्तरेन्द्रियाणि येन स विजितेन्द्रियः। अत एव समलोष्टाश्मकाञ्चनः समानि तुल्यानि लोष्टः मृत्तिका, अश्म, पाषाणः, काञ्चनं सुवर्णं यस्य सः समलोष्टाश्मकाञ्चनः शीतोष्णसुखदुःखेषु शीतजन्यसुखदुःखप्राप्तौ, उष्णताजन्यसुखदुःखप्राप्तौ। तथा मानाऽपमानयोः मानं प्रतिष्ठा अपमानम् अप्रतिष्ठा तयोः मानाऽपमानयोः। कूटस्थः विपरीतप्रत्ययैः अकम्प्यः योगी ब्रह्मयोगसाधनावान् यदा भवति तदा युक्तः योगारूढः ब्रह्मपदवीं प्राप्तः इति पण्डितैः उच्यते कथ्यते ॥ ७, ८ ॥

(मू. गी.) जितात्मनः प्रशान्तस्य परमात्मा समाहितः। शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥७॥ ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः। युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥८॥

(वेद गी.) तद्विप्रासो विपन्यवो जागृवांसः। समिन्धते विष्णोर्यत्परमं पदम् ॥ ५
सामवे. उत्तरा. अध्या. ८ खं. २ मं. ५ (ऋ. अष्ट. १ अध्या. २ व. ७ मं. २१ यजुः ३४।४४

तद्विप्रास इति = विष्णोः सर्वत्र व्यापकस्य परमात्मनः यत् परमं पदम् उत्तमं पदं ब्रह्मलक्षणं पदम् अस्ति। तत् ब्रह्मस्वरूपं मुक्तिपदं विप्रासः मेधाविनः योगिनः जागृवांसः इन्द्रियवृत्तिनिरोधेन निष्प्रमादेन जागरणशीलः अप्रमत्तः ज्ञानसम्प्राप्तयकारिणः। विपन्यवः विशेषेण परमात्मनः स्तुतिकर्तारः [शान्तिः सन्तः] समिन्धते सम्यक् दीपयन्ति योगाऽभ्यासाद्युपासनाभिः प्रकाशयन्तीति भावः। विप्रासः = "आज्जसेरसुक्" पा. ७।१।५०। विपन्यवः = स्तुत्यर्थस्य पनेर्धातोः बाहुलक औणादिको युप्रत्ययः। जागृवांसः = जागृ = निद्राक्षये लिटः क्वसुः क्रयादिनियमात्प्राप्तस्य इटो "वस्वेकाजाद्घसाम्" पा. ७।२।६७ इति नियमान्निवृत्तिः ॥ ५ ॥

सुहृदिति = सुहृत् सुष्ठु हृदयं यस्य स सुहृत्। मित्रं दानप्रतिदानादिलक्षणेन लक्षितं मित्रम् "ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति। भुंक्ते भोजयते चैव षड्विधं मित्रलक्षणम्" = अरिः सर्वदाऽपकर्ता शत्रुः। उदासीनः = सर्वदा सर्वत्र उपेक्षावान्। मध्यस्थः वादिप्रतिवादिनोः समः। द्वेष्यः = द्वेष्टुं योग्यः। बन्धुः बान्धवः। तेषु सर्वेषु तथा साधुषु सद्धर्मवत्सु पापेषु दुराचाररतेषु समबुद्धिः समानज्ञानं समानदृष्टिश्च ~~विशिष्यते~~ "समा समाकृतिम् आपन्ना सदा सर्वत्र बुद्धिर्यस्य स समबुद्धिः विशिष्यते उत्कृष्टो भवति॥९

(मू॰गी॰) सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु॥
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते॥९॥
(वेदगी॰) संजानीध्वं संपृच्यध्वं सं वो मनांसि जानताम्॥
देवा भागं यथा पूर्वे संजानाना उपासते॥१
अथ॰ कां॰ ६ अनु॰ ८ सू॰ ६४ मं॰ १

संजानीध्वमिति = हे समबुद्धयः सुहृदः!!! यूयं संजानीध्वं सुहृन्मित्रार्युदासीनादिकम् एकरसतया अवबोधत। अर्थात् सुहृन्मित्रार्युदासीनादिषु समानज्ञानयुक्ता भवत। ज्ञानस्य सर्वव्यवहारमूलत्वात् आदौ ज्ञानसमतायै प्रार्थना कृता। तथा यूयं संपृच्यध्वम् = समानज्ञानाः सन्तः संपृक्ताः संश्लिष्टकार्या भवत। तथा च वो युष्माकं मनांसि ज्ञानोत्पत्तिनिमित्तानि अन्तःकरणानि संजानताम् = समानम् एकविधम् अर्थं जानन्तु परस्परविरुद्धज्ञानजनकानि मा भूवन्नित्यर्थः। तत् दृष्टान्तेन द्रढयति। यथा येन प्रकारेण पूर्वे देवाः पूर्वतना देवाः दानादिगुणेन दीप्यमानाः सन्तः संजानानाः समानकार्यज्ञानाः सन्तः भागं भगवत्परिकल्पितं भुक्त्यै भागम् उपासते प्राप्नुवन्ति। अतः यूयमपि परस्परविद्वेषपरिहारेण संजानाना इष्टफलम् भजत इति भावः। संजानध्वम् = ज्ञा अवबोधने "संप्रतिभ्याम् अनाध्याने" इत्यात्मनेपदम्। "ज्ञाजनोर्जा" इति जा आदेशः। संपृच्यध्वम् = पृची संपर्के॥ अयं मन्त्रः ऋ॰ अष्ट॰ ८ अध्या॰ ८ व॰ ४९ मं॰ २ पाठान्तरेणास्ति "सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्। देवा भागं यथा पूर्वे संजानाना उपासते" ॥१॥

योगीति = योगी ब्रह्मणि चित्तं योक्तुं स्थापयितुं शीलमस्याऽस्तीति योगी, योगाऽभ्यासशीलो यतिः एकाकी स्वाऽतिरिक्तजनशून्यः। निराशीः सर्वाभ्यः आशीर्भ्यः विषयभोगाशाभ्यः निर्गतः यः स निराशीः "एकान्तवासो लघुभोजनादि मौनं निराशा करणावरोधः। मुनेरसोः संयमनं षडेते चित्तप्रसादं जनयन्ति शीघ्रम्" इति। अपरिग्रहः परिग्रहः शरीरनिर्वाहार्थवस्तूनि भवन्ति, कौपीनकं स्वाऽतिरिक्तः परिग्रहो शरीरनिर्वाहार्थं वस्तु नास्ति सोऽपरिग्रहः। यतचित्तात्मा यतौ निग्रहीतौ चित्तं मनः आत्मा देहेन्द्रियादिसंघातश्च तौ उभौ येन सः यतचित्तात्मा। रहसि एकान्ते गिरिगुहादौ स्थितः सततं नियमाऽनुकूलम् आत्मानं मनः स्वात्मानं वा ब्रह्मणि युञ्जीत संदधीत ॥१०॥

(मू. गी.) योगी युञ्जीत सततमात्मानं रहसि स्थितः।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥१०॥

(वेदगी.) युञ्जते मनं उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥४॥
ऋ. अष्ट. ४ अध्या. ४ व. २४ मं. १ यजुः ११।४

युञ्जते इति = ~~विप्रा मेधाविनः सुमुक्षवः~~ होत्रा ज्ञानयज्ञेन हवनकर्तारः, परेभ्यः ज्ञानं दातुं शीलाः ब्रह्मविद्भ्यश्च ज्ञानं ग्रहीतुं शीलाः वा विप्राः मेधाविनः मुमुक्षवः मनः स्वीयम् अन्तःकरणं सर्वविषयेभ्यो विनिवर्त्य परमात्मनि युञ्जते योजयन्ति परमात्माऽनुग्रहप्राप्त्ये संकल्पं कुर्वन्तीत्यर्थः। उत अपि च ते विप्रा एव बृहतः महतः विप्रस्य मेधाविनः विपश्चितः अखिलविद्यायुक्तस्य ज्ञानवतोऽनुज्ञया धियः = कर्माणि बुद्धीः वा युञ्जते समादधते। वयुनावित् "वयुनं वेत्तेः कान्तिर्वा प्रज्ञा वा। इत-शब्दः एवार्थे" स्ति। यो वयुनानि प्रज्ञानानि वेत्ति सः "अन्येषामपि दृश्यते" इत्यनेन दीर्घः। वयुनावित् ~~[illegible]~~ प्रज्ञावेत्ता, एकः एकाकी स्वातिरिक्तजन्यशून्य एव देवस्य सर्वप्रकाशकस्य सवितुः सर्वस्य जगतः प्रसवितुः ईश्वरस्य मही महती परिष्टुतिः परिस्तवनं मही परिष्टुतिः" इत्यत्र विभक्तिव्यत्ययः। विदधे करोति ॥४॥

शुचाविति = शुचौ मार्जनप्रोक्षणाभ्यां शुद्धे देशे स्थाने आत्मनः स्वकीयस्य आसनं स्थितिस्थानं नात्युच्छ्रितम् अत्यन्तोन्नतिरहितं नातिनीचम् अतिम्नं चैलाजिनकुशोत्तरं चैलं वस्त्रम् अजिनं वैयाघ्रं कार्ष्णं वा कुशा दर्भा उत्तरम् उपर्युपरि व्युत्क्रमेण यस्य। तच्चैलाऽजिनकुशोत्तरम् अधः कुशासनं ततोऽजिनं ततो वस्त्रमिति क्रमः। एवंविधम् आसनं स्थिरं निश्चलं यथा स्यात्तथा प्रतिष्ठाप्य कल्पयित्वा। तत्र आसने उपविश्य यतचित्तेन्द्रियक्रियः = यता वशीकृता चित्तस्य मनसः इन्द्रियाणां कर्मज्ञानोभयविधेन्द्रियाणां क्रिया चेष्टा विषयप्रवृत्तिर्वा येन स यतचित्तेन्द्रियक्रियः मनः मनोवृत्तिम् एकाग्रं लक्ष्याऽभिमुखं कृत्वा यतिः आत्मविशुद्धये आत्मनः पवित्रीकरणाय निःशेषवासनानिवृत्तये योगं योगसमाधिं युञ्ज्यात् कुर्यात् अभ्यसेदिति यावत् ॥ ११, १२ ॥

(मू० गी०) शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः। नात्युच्छ्रितं नातिनीचं
चैलाजिनकुशोत्तरम् ॥ ११ ॥ तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः।
उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥

(वेद गी०) युक्त्वाय सविता देवान्त्स्वर्यतो धिया दिवम्। बृहज्ज्योतिः करिष्यतः
सविता प्रसुवाति तान् ॥ यजुः ११।३ (यद्वा)
उपह्वरे गिरीणां संगमे च नदीनां धिया विप्रो अजायत ॥
ऋ० अष्टा० ८ अध्या० ६ व० २८ साम २।२।२।२९

नूतन मंत्रः ११, १२, १३, ४
अथ० कां० २० सू० ८६ मं० १८ मंड० ३ सू० ३५ मं० ४
"ब्रह्मणा ते ब्रह्मयुजा युनज्मि हरी सखाया सधमाद आशू ॥ स्थिरं रथं सुखमिन्द्राधितिष्ठन् प्रजानन् विद्वाँ उपयाहि सोमम् ॥"

युक्त्वायेति = सविता ज्ञानयोगप्रसविता योगी आत्मविशुद्धये स्वर्यतः सांसारिकसुखप्रापकान् देवान् कर्मज्ञानोभयविधेन्द्रियाणि परब्रह्मणि युक्त्वाय युक्तं कृत्वा धिया एकाग्रबुद्ध्या दिवं दिव्यस्वरूपं परमात्मानं ध्यायति। ये च योगिनः बृहत् महत् ज्योतिः विज्ञानमयं प्रकाशं करिष्यतः संस्कुर्वन्ति कालप्रत्ययः विभक्तिव्यत्ययश्च। सविता जगदुत्पादकः परमेश्वरः तान् ब्रह्मविदः योगिनः प्रसुवाति प्रसौति अभ्यनुजानातीतिभावः ॥ ३ ॥ उपह्वरे इति। गिरीणां पर्वतानाम् उपह्वरे गुहासु पर्वतैकदेशे इतिभावः अथवा नदीनां संगमे नदीसंयोगस्थाने विप्रः मेधावी ज्ञानी पुरुषः धियः बुद्धीः परमेश्वरज्ञानबुद्धीः अजायत जनयति उत्पादयति। अजायत। अत्र लडर्थे लङ्। ॥ २९ ॥ ब्रह्मणेति = हे इन्द्र हे आत्मन्! सधमादे ब्रह्माऽऽनन्दाऽनुभवकरणदशायां अर्थात् योगसमाधिसमये आशू शीघ्रगतिकारिणौ हरी देहदुःखहर्तारौ सखाया समानस्वरूपौ ब्रह्मयुजा आत्मनि युक्तौ हरी शरीरधारकौ प्राणापानौ ब्रह्मणा परमात्मना सह युनज्मि योगाभ्यासेन संयोजयामि। हे इन्द्र! हे आत्मन्! त्वं सुखम् सुखपूर्वकं यथा स्यात्तथा स्थिरं कायशिरोग्रीवादिस्थिरतायुक्तं रथं देहम् अधितिष्ठन् स्थितिं कुर्वन् प्रजानन् प्रकृष्टं ज्ञानं सम्पादयन् विद्वान् ज्ञानीभूत्वा सोमम् आनन्दमयं ब्रह्माऽमृतरसम् उपयाहि प्राप्नुहि ॥ ४ १८७

समम् इति = कायशिरोग्रीवं = कायः कटेः ऊर्ध्वप्रदेशः देहः। शिरः ग्रीवा च कायशिरोग्रीवं समम् ऋजु अचलं चलनरहितं यथा स्यात्तथा धारयन्। स्थिरः सम्यक् चलनरहितः सन् स्वं स्वकीयं नासिकाग्रं नासिकाया अग्रभागं नेत्राभ्यां सम्प्रेक्ष्य दृष्ट्वा दिशः पूर्वदक्षिणादीः चकारात् आत्मशरीरम् अनवलोकयन् अपश्यन्। प्रशान्तात्मा, प्रकर्षेण शान्तः रागद्वेषादिविमुक्तः आत्मा मनो यस्य सः, प्रशान्तात्मा, विगतभीः विशेषेण गता दूरीभूता भीः शत्रुप्रभृतिभयं यस्य सः विगतभीः। ब्रह्मचारिव्रते स्थितः = ब्रह्मचारिणां यद् व्रतं भिक्षाचर्य्यवेदाऽभ्यासादिकं व्रतं तस्मिन् स्थितः। निष्ठावान् मनः अन्तःकरणवृत्तिं संयम्य संनिरुध्य मच्चित्तः मयि ब्रह्मणि चित्तं यस्य स मच्चित्तः। मत्परः अहमेव परं स्थानं यस्य स मत्परः युक्तः सर्वत्र ब्रह्मैव भावयन् आसीत आसने मौनम् उपविशेत् १३, १४

(मू० गी०) समं कायशिरोग्रीवं धारयन्नचलं स्थिरः। सम्प्रेक्ष्य नासिकाग्रं स्वं
दिशश्चानवलोकयन् ॥१३॥ प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥१४॥

(वेदगी०) हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सखायः।
अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे ॥८॥
ऋ० अष्ट० ८ अध्या० २ व० २४ मं० ८ (मं० १० अनु० ६ सू० ७१ मं० ८)

हृदेति = सखायः समानख्यानाः समानज्ञानव्रतचारिणः सर्वमित्राः ब्राह्मणाः ब्रह्मवेत्तारः यतयः हृदा प्रशान्तचित्तेन - तष्टेषु सूक्ष्मताम् आपादितेषु अचिन्त्याऽध्यात्मविषयेषु मनसः अन्तःकरणवृत्तेः, जवेषु गन्तव्यार्थेषु यत् ब्रह्ममयं तत्त्वम् संयजन्ते संगच्छन्ते। यद्वा संपूजयन्ति। अत्र ब्रह्मसमाधिसाधनसमये त्वम् मनसश्चाञ्चल्यम् अहन्निश्चयेन विजहुः विशेषेण परित्यजन्ति। ओहब्रह्माणः ऊहमानं ब्रह्मविद्याश्रुतिमतिबुद्धिलक्षणं येषां ते ऊहब्रह्माणः सांसारिकसंकटेषु अप्रतिबध्यमानाः त्वे = एके ब्रह्मज्ञानिनः वेद्याभिः वेदितव्याभिः ब्रह्ममयीभिः वृत्तिभिः विचरन्ति विशेषतः सर्वत्रैव चरन्ति। उ इति प्रसिद्धौ ॥८॥

युंजन्निति= योगी योगयुक्तात्मा यतिः सदा सर्वदाकाले आत्मानम् अन्तःकरणम् एवमुक्तप्रकारेण युञ्जन् अनुसंधानं कुर्वन् नियतमानसः नियतं विकारादिभ्यः परिहृतं स्थिरीकृतं वा मानसं मनः येन सः नियतमानसः योगसमाधिना स्थिरचित्तः सन् निर्वाणपरमां निर्वाणं मोक्षरूपम् अत्युत्कृष्टं सुखं यस्यां सा ताम् मत्संस्थां मम एव संस्था स्थितिर्यत्र तां शान्तिम् आत्यन्तिकसंसारोपरतिम् अधिगच्छति प्राप्नोति ॥१५॥

(मू. गी.) युञ्जन्नेवं सदात्मानं योगी नियतमानसः।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥१५॥

(वेद. गी.) नृचक्षसो अनिमिषन्तो अर्हणा बृहद्देवासो अमृतत्वमानशुः।
ज्योतीरथा अहिमाया अनागसो दिवो वर्ष्माणं वसते स्वस्तये ४
ऋ. अष्ट. ८ अध्या. २ व. ३ मं. ४ (मंड. १० अनु. ५ सू. ६३)

नृचक्षस इति= नृणां कर्मज्ञाननेतॄणाम् उभयविधेन्द्रियाणां चक्षसः द्रष्टारः नियतेन्द्रिया इति भावः। अनिमिषन्तः निमेषम् अकुर्वाणाः सर्वदा जागरूकाः देवासः विद्वांसः ब्रह्मज्ञानिनः अर्हणा योगसाधनेन निर्वाणयोग्यताम् आपन्नाः सन्तः बृहत् अतिमहद्ब्रह्मसंस्था स्वरूपम् अमृतत्वम् अमरणधर्मं निर्वाणपदवीम् आनशुः प्राप्नुवन्ति। अथ च ते यतयः ज्योतीरथाः ब्रह्मज्ञानेन दीप्यमानशरीरोपेताः जीवन्मुक्ताः। अहिमायाः केनचिदिन्द्रियविशेषेणापि अहन्तव्यप्रज्ञाः अत एव अनागसः रागद्वेषादिपापरहिताः दिवः द्युलोकस्य वर्ष्माणं देहं नाभिस्थानं ब्रह्मसंस्थां निर्वाणपरमां शान्तिम् स्वस्तये अविनाशाय अनावृत्तये मुक्तिकल्याणाय वा वसते अधिवसन्तीति ॥ ४

नात्यश्नेति = हे अर्जुन! अत्यश्नतः बहुभक्षकस्य योगिनः योगः योगसिद्धः नास्ति न सिद्ध्यति। एकान्तं सर्वथा अनश्नतः निराहारस्य यतेः योगः नास्ति। श्रवणमनने अपि न सिद्ध्यतः। तथा अतिस्वप्नशीलस्य अत्यन्तं शयानस्यापि योगः न सिद्ध्यति। जाग्रतः जागरूकस्यापि योगः न सिद्ध्यति ॥ १६ ॥

(मू. गी.) नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६ ॥

(वेद गी.) न तिष्ठन्ति न निमिषन्त्येते देवानां स्पश इह ये चरन्ति।
अन्येन मदाहनो याहि तूयं तेन विवृह रथ्येव चक्रा ॥ १ ॥

न तिष्ठन्तीति = इह अस्मिन् लोके ये मुमुक्षवः जीवाः देवानाम् इन्द्रियाणां देहस्य शयनाशनादिकार्येषु स्पशः चराः दूतवत्कार्यसम्पादकाः चरन्ति भ्रमन्ति। एते जीवाः योगसाधनाय न तिष्ठन्ति योगसमाधौ स्थितिं न कुर्वन्ति। एते एव न निमिषन्ति पक्ष्मसंकोचनं न कुर्वन्ति योगसमाधये जाग्रतीत्यर्थः। अतिजाग्रतामपि योगः न सिद्ध्यति। हे आहनः = आङ् पूर्वात् हन्तेः असुन्प्रत्ययः। हे आहन्तः! हे योगाऽभ्यासनिमित्ते क्लेशभोगिन्! योगिन्! मत् मत्तः मच्छिक्षितः मद्ध्यानतः एव अन्येन सह देहरक्षणनिमित्ते युक्त आहारशयनादिभिः सह तूयं तूर्णं याहि गच्छ रमस्व चेति शेषः। तेन युक्ताहारविहारादिना सह रथ्या इव चक्रा = रथाधाराणि चक्राणि अक्षेण सह संश्लेषं कुर्वन्ति यथा, तथा त्वम् अपि योगसमाधिना संश्लेषं कुरु ॥ १६ ॥

यदेति = योगिनः यदा यस्मिन् काले विनियतं विषयसम्बन्धाऽवरुद्धं चित्तम् आत्मनि परब्रह्मणि अवतिष्ठते स्थिरीभवति। यदा च सर्वकामेभ्यः सर्वविषयेभ्यः निःस्पृहः निरिच्छः भवति अर्थात् विषयेषु इन्द्रियाणि न प्रवर्तयति। तदा तस्मिन् काले युक्तः योगारूढ इति विद्वद्भिः उच्यते कथ्यते ॥१८॥

(मू० गी०) यदा विनियतं चित्तमात्मन्येवाऽवतिष्ठते।
निस्पृहः सर्वकामेभ्यः युक्त इत्युच्यते तदा ॥१८॥

(वेद० गी०) अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं
पयोऽमृतं मधु। यजुः १९ अध्या० ७५ श्लो०

अन्नादिति = अन्नात् भक्ष्यादिविषयात् परिस्रुतः सर्वतः स्रुतः परिपक्वात् फलस्वरूपात् रसं ब्रह्ममयरसम्, ब्रह्मणा ब्रह्मस्वरूपेण आत्मना आत्मा व्यपिबत् पिबति गृह्णातीत्यर्थः। प्रजापतिः स्वोत्पन्नविचारसन्ततिपरिरक्षकः अयमेव यतिः क्षत्रं निजरक्षां पयः दुग्धमिव सोमं सत्वगुणं यद्वा ब्रह्मस्वरूपं व्यपिबत् पिबति गृह्णाति। स यतिः एव ऋतेन सत्यस्वरूपेण आत्मना सत्यं सत्यस्वरूपं ब्रह्म इन्द्रियम् इन्द्रेण जीवात्मना जुष्टं विपानं विविधं पानं रक्षणं यस्मात् तथाभूतं शुक्रं पवित्रम्। अन्धसः मोहाऽऽविष्टस्य इन्द्रस्य जीवात्मनः इन्द्रियम् विज्ञानसाधकम् इदं पयः सुखसाधकम् अमृतं मृत्युरोगात्पृथक्करम् अमरणधर्मात्मं वा मधुरम् पदं युक्तत्वपदं प्राप्नोति ॥७५॥

यथेति = यथा येन प्रकारेण दीपः निवातस्थः वायुरहितस्थाने स्थितः न इङ्गते न चेष्टते। यतचित्तस्य यतं निश्चलीकृतं ब्रह्मणि स्थापितं वा चित्तं येन स यतचित्तः तस्य यतचित्तस्य आत्मनः योगं परमात्मसम्बन्धियोगं समाधिं युञ्जतः अनुष्ठातुः योगिनः यतेः सोपमा निवातस्थदीपोपमा स्मृता कथिता। यथा निवातस्थः दीपः न चलति तथा ब्रह्मविदः ब्रह्मणि स्थापितं चित्तं न चलति ॥१९॥

(भ॰गी॰) यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥१९॥
(वेद॰गी॰) यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति।
इनो विश्वस्य भुवनस्य गोपः स मा धीरः पाकमत्रा विवेश ॥१०॥

^ परमात्मध्यानात्मकेन ज्ञानेन

यत्रेति = यत्र यस्मिन् योगिनि यतौ सुपर्णाः शोभनपतनानि स्वस्वविषयग्रहणाय कुशलानि इन्द्रियाणि[1] चक्षुरादीनि[3] अमृतस्य[2] भागं विषयाद्वविच्छिन्नचैतन्यम् अमृतम् इत्युच्यते। तस्य (परमात्मनः) भागं भजनीयं स्वस्वं शम् अनिमेषम् निमेषरहितं सततम् (यथास्यात्तथा) विदथा वेदनेन ^ वा त्यवच्छिन्नचैतन्येन अभिस्वरन्ति अभिप्रयन्ति आवरणपगमेन स्फारयन्ति। यः अस्य देहेन्द्रियसंघा तस्य इनः स्वामी, स एव विश्वस्य सर्वस्य भुवनस्य देहस्वरूपभुवनस्य गोपः रक्षिता। स एव धीरः समाधिनिष्ठः सर्वदा अविक्रियः मा मां (अत्र = अस्मिं योगसमाधौ) योगनिष्ठं अमुम् पाकं परिपक्वमनस्कं निर्मलदर्पणवदतिनिर्मलसत्त्वोद्रिक्तमनस्कम् आविवेश आविशतु ॥१०॥

यत्रेति = योगसेवया योगस्य योगसमाधेः सेवयाऽनुष्ठानेन निरुद्धं सांसारिकविषयविनिवृत्तं ब्रह्मवृत्तौ स्थापितं चित्तं यत्र यस्या मवस्थायाम् उपरमते सांसारिकविषयेभ्यः उपशमं गच्छति। यत्र यस्यां चित्तपरिपक्वाऽवस्थायाम् आत्मना स्वस्वरूपेण आत्मनि निर्मलान्तःकरणे आत्मानं ब्रह्मस्वरूपं पश्यन् अवलोकयन् तुष्यति आनन्दं प्राप्नोति ॥ २० ॥

(मू. गी.) यत्रोपरमते चित्तं निरुद्धं योगसेवया।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥२०॥
(वेद गी.) यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह।
ब्रह्मा मा तत्र नयतु ब्रह्मा ब्रह्म दधातु मे ब्रह्मणे स्वाहा ॥१॥
अथ. कां. १९ अनु. ५ सू. १ मं. १

यत्रेति = यत्र यस्यामवस्थायां यद्वा यस्मिन् स्थाने ब्रह्मविदः योगसमाधिना ब्रह्मस्वरूपं जानन्तः दीक्षया दण्डकृष्णाजिनमेखलाधारणात्मिकया, तपसा योगव्रतादिना सह ब्रह्मपदवीं यान्ति गच्छन्ति। तत्र तस्यां ब्रह्मपदव्यां ब्रह्मा जगत्स्रष्टा परमेश्वरः मा मां नयतु प्रापयतु गमयतु इतियावत्। ब्रह्मा परमात्मा ब्रह्म स्वस्वरूपभूतं योगसमाधिजन्यं तेजो वा मे मह्यं ब्रह्मविदे दधातु धारयतु। ब्रह्मणे सच्चिदानन्दस्वरूपाय परब्रह्मणे इदं शरीरं स्वाहा सुहुतं प्रदत्तम् अस्तु ॥१

सुखमिति = यत्र यस्यां शुद्धसत्त्वप्राप्तिदशायां ब्रह्मवेत्ता यतिः बुद्धिग्राह्यं सूक्ष्मबुद्ध्यैकगम्यम् अतीन्द्रियम् इन्द्रियाऽगोचरम् आत्यन्तिकम् अन्तिकमतिक्रम्य वर्तमानम् आत्यन्तिकम् उत्पत्तिविनाशरहितम् यत्, तत् सुखं वेत्ति जानाति। यत्र अयं योगी स्थितः स्थितिं प्राप्तः सन् तत्त्वतः परमार्थस्वरूपात् न चलति न प्रभ्रश्यति ॥२१॥

(मू॰ गी॰) सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥२१॥

(वेदगी॰) य ईं चिकेत गुहा भवन्तमा यः ससाद धारामृतस्य।
वि ये चृतन्त्यृता सपन्त आदिद्वसूनि प्र ववाचास्मै ॥४॥
ऋ॰ अष्ट॰ १ अध्या॰ ५ व॰ ११ मं॰ ४ (मंड॰ १ सू॰ ६७ मं॰ ४)

य ईमिति = यः पुमान् ईम् एनम् गुहाभवन्तं गुहायां हृदयाकाशे भवन्तं विद्यमानं सुखस्वरूपं परंब्रह्म चिकेत जानाति। यश्च ऋतस्य सत्यस्य धारां धारयितारम् ईम् एनं परमात्मानम् आससाद उपास्ते। ये च ब्रह्मनिष्ठाः ऋता ऋतानि सत्यस्वरूपाणि सुखानि सपन्तः समवयन्तः एतं परमात्मानं विचृतन्ति स्तुतीः कुर्वन्ति। आदित् = तदनन्तरम् एव अस्मै स्तुतिकर्त्रे जनाय वसूनि ~~[illegible]~~ वासस्थानं मुक्तिधाम ~~[illegible]~~ प्रववाच प्रकाशयति परमात्मा प्रयच्छतीति भावः ॥४॥

यमिति = यम् आत्मोपलब्धि परमकारणम् निर्विकल्पसमाधिं लब्ध्वा प्राप्य यतिः अपरं ब्रह्मप्राप्तिमितं लाभं ततः निर्विकल्पसमाधेः अधिके विशेषं न मन्यते न स्वीकरोति। यस्मिन् निर्विकल्पसमाधौ स्थितः स्थितिं प्राप्तः सन् गुरुणा आधिभौतिकादिना महता दुःखेन न विचाल्यते चालयितुं न शक्यते ॥२२॥

(मू० गी०) यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥२२॥
(वे० गी०) यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति।
यो जातमस्य महतो महि ब्रवत्सेदु श्रवोभिर्युज्यं चिदभ्यसत् ॥२॥
ऋ० अष्ट० २ अध्या० २ व० २६ मं० २ (मंड० १ अनु० २१ सू० १५६ मं० २)

य इति = यः ब्रह्मविद् यतिः पूर्व्याय पूर्वकालीनाय नित्यायेत्यर्थः। वेधसे विविधजगत्कर्त्रे नवीयसे नित्यनूतनाय अत्यन्तरमणीयायेत्यर्थः। सुमज्जानये स्वयमेवोत्पन्नाय "जने रौणादिक इः" "सुमत् = स्वयम् इति यास्कः"। विष्णवे व्यापकाय परब्रह्मणे ददाशति निर्विकल्पसमाधिना मनोवृत्त्यादिकं ददाति। यश्च ब्रह्मवित् यतिः अस्य विष्णोः महतः महानुभावस्य महि महत् जातं हिरण्यगर्भादिरूपजन्म ब्रवत् ब्रूयात् संकीर्तयेत्। सेदु = स एव अपि "इत् एवार्थकः, उः अप्यर्थकः"। स्तोता ब्रह्मविद् यतिः श्रवोभिः कीर्तिभिः ~~युक्तः सन्~~ युज्यं चित् ब्रह्मवेत्तृभिः गन्तव्यं तत् मुक्तिपदम् अभि अभिमुख्येन असत् गच्छति प्राप्नोति ॥२॥

तमिति = दुःखसंयोगवियोगं दुःखशब्दसम्बन्धि सुखमपि च गृह्यते। दुःखानाम् आध्यात्मिकादीनां सुखानां पुत्रवित्तादिजनित सुखानां संयोगः संसर्गः, तेन वियोगो यस्य स दुःखसंयोगवियोगः शुद्धान्तःकरणस्थितिविशेषः तं योगसंज्ञितं योग इति संज्ञितं संज्ञा यस्य सः योगसंज्ञितः, तं योगसंज्ञितं योगं विद्यात् जानीयात्। स एव निर्विकल्पसमाधिमयः योगः निश्चयेन शास्त्रप्रतिपादितविद्वत्प्रत्यक्षमेवेति निश्चयेन चित्तदार्ढ्येन अनिर्विण्णचेतसा अनिर्विण्णेन तीव्रमोक्षेच्छारहितेन चेतसा मनसा योक्तव्यः समीचीनतया कर्तव्यः।

(मू॰ गी॰) तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥२३॥

(वेदगी॰) सम्भूतिञ्च विनाशञ्च यस्तद्वेदोभयं सह।
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते॥ यजुः ४०।११

सम्भूतिमिति = सम्भूतिञ्च समस्तजगतः संभवैकहेतुं परंब्रह्म च विनाशञ्च विनाशि शरीरं च यः योगी तदुभयं वेद जानाति सह एकीभूतम्। शरीरग्रहणेन ज्ञानोत्पत्तिहेतूनि कर्माणि करोति। सः विनाशेन विनाशिना शरीरेण मृत्युं तीर्त्वा उत्तीर्य सम्भूत्या आत्मविज्ञानेन अनिर्विण्णचेतोयुक्तेन ब्रह्मध्यानेन अमृतत्वं मुक्तिपदम् अश्नुते प्राप्नोति ॥११॥

संकल्पेति:- संकल्पप्रभवान् सम्यक्कृतया कल्पनं संकल्पः ततः प्रभवन्तीति संकल्पप्रभवाः संकल्पोत्पन्नाः तान् संकल्पप्रभवान् कामान् मनोरथान् सर्वान् सकलान् अशेषतः संपूर्णतया त्यक्त्वा विहाय मनसा कामसंकल्परहितमनसा इन्द्रियग्रामं चक्षुरादीन्द्रियसमूहं समन्ततः सर्वतः विनियम्य तत्प्रवृत्तिं निगृह्य शनैः शनैः क्रमशः उपरमेत् उपरतिं कुर्यात्। तया धृतिगृहीतया धृत्या धैर्येण गृहीतया वशीकृतया बुद्ध्या मत्या मनः चित्तम् आत्मसंस्थम् आत्मनि चैतन्यरूपे स्थितिं कृत्वा स्वयं किञ्चिदपि बाह्याभ्यन्तरं किमपि वस्तु न चिन्तयेत् चिन्तनं न कुर्यात् ॥२४, २५॥

(मू. गी.) संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः। मनसैवेन्द्रिय
ग्रामं विनियम्य समन्ततः।२४। शनैः शनैरुपरमेद्बुद्ध्या धृति
गृहीतया। आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥२५॥

(वे. गी.) धृषतश्चिद्धृषन्मनः कृणोषीन्द्रियत्त्वम्। तीव्रैः सोमैः सपर्यतो
नमोभिः प्रतिभूषतो भद्रा इन्द्रस्य रातयः। ऋ. अष्ट. ६ अध्या. ४ वर्ग. ८
आदधामि ते पदं समिद्धे जातवेदसि। अग्निः शरीरं वेवे-
ष्ट्वसुं वागपि गच्छतु ॥ अथ. कां. २ अनु. ३ सू. १२ मं. ८

सर्वविषयग्राहकम्

धृषत इति:- हे इन्द्र! हे जीवात्मन्! धृषतः चित् धृष्टादपि धृषत् धृष्टं चञ्चलं मनः "मनःशब्देन सर्वाणीन्द्रियाणि गृह्यन्ते" इन्द्रियत्वम् इन्द्रियग्रामं कृणोषि करोषि विधत्से। यत् यस्मात् कारणात् त्वं तीव्रैः तीक्ष्णैः सोमैः शान्तमयैः स्तोत्रैः सपर्यतः पूजयतः, नमोभिः नमस्कारैः प्रतिभूषतः अलंकुर्वतः ~~आत्मनः अभिमतं मुक्तिपदं दित्ससीति शेषः। यस्य~~ इन्द्रस्य जीवात्मनः तव रातयः ज्ञानानि भद्राः कल्याणकराणि भवन्ति ॥८॥
तथा समिद्धे सम्यक् प्रकाशमाने जातवेदसि परब्रह्मणि "जातवेदाः कस्मात् जातानि वेद जातानि वैनं विदुः जाते जाते विद्यत इति निरु. ७।१९" ते तव ब्रह्मनिष्ठस्य यतेः पदं प्राप्तिस्थानं मुक्तिधामेत्यर्थः। आदधामि आसमन्तात् धारयामि। अग्निः परमात्मा त्वदीयं शरीरं वेवेष्टु कृत्स्नम् अङ्गं व्याप्नोतु। अर्थात् सर्वं शरीरं ब्रह्मध्यानात् ब्रह्ममयं भवतु। यद्वा अग्निस्वरूपः परमात्मा त्वदीयं शरीरजन्यं विकृतभावम् दहतु। वाक् अपि वागिन्द्रियम् अपि असुं प्राणमयं कोशं गच्छतु प्राप्नोतु ॥८॥

यत इति = संकल्पवेगात् चञ्चलं रागादिदोषग्रस्तत्वात् अस्थिरम् अव्यवस्थं मनः यतः यतः यं यं विषयमुद्दिश्य निश्चरति निर्गच्छति। ततस्ततः तस्मात् तस्मात् विषयात् नियम्य संरुद्ध्य एतत् मनः आत्मनि स्वस्मिन्नेव वशं नयेत् प्रापयेत् ॥ २६ ॥

(मू. गी.) यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥

(वेदगी.) अन्तरिक्षेण पतति विश्वा रूपावचाकशत्।
मुनिर्देवस्य देवस्य सौकृत्याय सखा हितः ॥ ४ ॥
ऋ. अष्ट. ८ अध्या. ८ व. २४ मं. ४ (मंड १० अनु. ११ सू. १३६ मं. ४)

अन्तरिक्षेणेति = चञ्चलम् अस्थिरम् एतत् मनः विश्वा विश्वानि सर्वाणि रूपा रूपाणि रूप्यमाणानि पदार्थजातानि अवचाकशत् ~~अभिपश्यत्~~ अभिपश्यत् सत् स्वतेजसा च दर्शयत् अन्तरिक्षेण आकाशेन पतति गच्छति। चञ्चलं मनः सर्वत्र गच्छतीत्यर्थः। मुनिः मुन्यवस्थां गतं तत् मनः सर्वविषयेभ्यः उपरतं सत् देवस्य द्योतमानस्य शुद्धस्वरूपस्य देवस्य आत्मनः सखा सखिभूतम् अत एव सौकृत्याय सुष्ठु परमात्मानम् उद्दिश्य क्रियमाणं कर्म सुकृतं तस्य भावाय योगसमाधेः सम्यगनुष्ठापनाय हितः स्थापितं भवति। मुनिः, सखा, हितः, एतत्पदत्रये लिङ्गव्यत्ययः ॥ ४ ॥

प्रशान्तमनसमिति = शान्तरजसं शान्तः उपरतः रजोगुणः यस्य तं तथाभूतम् अकल्मषं कल्मषं भेदवासना, नास्ति कल्मषं भेदवासना यस्य तं तथाभूतम्। प्रशान्तमनसं प्रकर्षेण शान्तं विषयशून्यताम् आपन्नं मनः यस्य, तं तथाभूतम् अत एव ब्रह्मभूतं ~~ब्रह्मपदवीं प्राप्तम्~~ सर्वत्र ब्रह्मदृष्टिमन्तम् एनम् योगिनम् ब्रह्मविदम् उत्तम् अत्युत्कृष्टं सुखं ब्रह्मानन्दसुखम् उपैति प्राप्नोति ॥ २८ ॥

(मू· गी·) प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम्।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २८

(वे· गी·) युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियम्।
अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ यजुः ११।१ यद्वा
वातस्याश्वो वायोः सखोऽथो देवेषितो मुनिः। उभौ समुद्रावाक्षेति
यश्च पूर्व उतापरः ॥ ऋ· अष्ट· ८ अध्या· ७ व· २४ मं· ५ (मं· १० सू· १३६ मं· ५)

योगेन स्वान्तः करण द्वारा सर्वैर्ब्रह्मपदप्रयत्नादिकैः मनुष्यः यद्वा ऐश्वर्याभिलाषकः मनुष्य इति स्वा· दयानन्दः

युञ्जान इति = सविता ~~ब्रह्मपदप्राप्त्यभिलाषुकः~~ योगाभ्यास द्वारा स्वात्मनि यतिः तत्त्वाय ब्रह्मज्ञानतत्त्वप्राप्तये प्रथमम् आदौ मनः अन्तःकरणम् धियः तद्विषय प्राप्तिकर्त्रीः बुद्धीः युञ्जानः अनुसंदधानः अग्नेः प्रकाशस्वरूपस्य परब्रह्मणः ज्योतिः प्रकाशमयं स्वरूपं निचाय्य निश्चित्य पृथिव्याः अधि मर्त्यलोकात् उपरि आभरत् सम्यक्तया धारयति। आभरत् इत्यत्र लडर्थे लङ् ॥ १ ॥ वातस्येति = वातस्य वायोः अश्वः अशिता भोक्ता मुनिः मन्ता ब्रह्मवित् यतिः वायोः परमात्मनः सखा मित्रभूतः परमात्मध्यानलग्नः अथो अपि च देवेषितः देवेन द्योतमानेन परमात्मना इषितः ~~प्रेरितः~~ ब्रह्मज्ञानप्राप्तये प्रेरितः उभौ समुद्रौ द्वावेव समुद्रौ संसारार्णवम् अनेनैव देहेन आकाशार्णवं दिव्यदेहेन आक्षेति अभिगच्छति। क्षितिः निवासगत्योः "छान्दसो विकरणस्य लुक्" कौ तौ समुद्रौ यः पूर्वः समुद्रः जीवन्मुक्त्यपेक्षया दैहिकसम्बन्धार्णवः उत अपि च अपरः कैवल्यमुक्त्यपेक्षया अपरः देहविनाशानन्तरं कैवल्यमुक्त्यर्णवः। जीवन्मुक्त्यवस्थायां पूर्वस्मिन् समुद्रे वासः। कैवल्यमुक्त्यवस्थायां च अपरसमुद्रे वास इति भावः ॥ ५ ॥

सर्वभूतस्थमिति = योगयुक्तात्मा, पुरुषं मुक्त्यां योजयतीति योगः योगेन निर्विकल्पसमाधिना युक्तः आत्मा मनो यस्य, सः योगयुक्तात्मा अत एव सर्वत्र सर्वस्मिन् वस्तुनि समदर्शनः समभावम् आपन्नं दर्शनं यस्य स समदर्शनः ब्रह्मवित् सर्वभूतस्थम् = भवन्तीति भूतानि ब्रह्मादिस्तम्बान्तानि तेषु तत्स्वरूपेण तिष्ठतीति सर्वभूतस्थः तं तथाभूतम् आत्मानं स्वस्वरूपमेव ईक्षते पश्यति। एवञ्च सर्वभूतानि सर्वाणि भूतानि आत्मनि स्वस्वरूपे ईक्षते तत्सत्ताम् अवलोकयति ॥२९॥

(मू.गी.) सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥२९॥
(वेद.गी.) यस्तु सर्वाणि भूतान्यात्मन्नेवाऽनुपश्यति।
सर्वभूतेषु चात्मानं ततो न विचिकित्सति ॥यजुः ४०।६॥

~~ईशोपनिषद्~~
मन्त्र.

य इति = यः शान्तः जितेन्द्रियः ब्रह्मवित् यतिः सर्वाणि सकलानि भूतानि चेतनाऽचेतनानि आत्मन् आत्मनि स्वस्वरूपे "मयि एव सर्वाणि भूतानि अवस्थितानि न मद्व्यतिरिक्तानि इत्येव अनुपश्यति अनुभवति। सर्वभूतेषु सर्वेषु चेतनाऽचेतनेषु पदार्थेषु च आत्मानं स्वस्वरूपं पश्यति निरीक्षते। ततः एवंविधाऽनुभवे सति न विचिकित्सति निन्द्याचरणं न विधत्ते। एवं पश्यतो योगिनः परब्रह्मरूपाणि आत्मसंस्थानि भवन्ति। विज्ञानघनानन्दैकत्वात् अतो विचारात् न निवर्तते इतिभावः ॥४०।६॥

य इति = यः निर्विकल्पयोगसमाधिनिष्ठः ब्रह्मवित् यतिः मां सच्चिदानन्दैकरसं मां परं ब्रह्म सर्वत्र चराचरपदार्थेषु पश्यति अवलोकते। सर्वत्र सकलं ~~पदार्थमात्रं~~ ब्रह्मादिस्तम्बपर्यन्तं पदार्थमात्रं मयि परे ब्रह्मणि पश्यति अनुभवति। सदा एव एकत्वं पश्यतः तस्य यतेः अहं सच्चिदानन्दस्वरूपं परं ब्रह्म न प्रणश्यामि अदर्शनं न प्राप्नोमि तद्दृष्टेरविषयं न गच्छामीति भावः। स च ब्रह्मवित् यतिरपि मे मम परब्रह्मणः न प्रणश्यति अनात्मतादात्म्यपत्तिं न करोति ॥ ३० ॥

(मू० गी०) यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥

(वेदगी०) यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ यजुः ४०।७

~~अस्य श्लोकेन तुलनात्मकोऽयं~~ मन्त्रः

यस्मिन्निति = यस्मिन् निर्विकल्पयोगसमाध्यवस्थाविशेषे एकत्वं सर्वत्र ब्रह्माऽद्वैतभावम् अनुपश्यतः अवलोकयतः सर्वाणि भूतानि एकत्वेन ध्यायतः। विजानतः "आत्मैवेदं सर्वम्" "सर्वं खल्विदं ब्रह्म" इत्येवमादिवाक्यविचारेण विधूतविज्ञानस्य। सर्वाणि भूतानि चेतनाऽचेतनानि आत्मा एव अभूत् संभवति। आत्मज्ञानमग्ने मनसि यतिः जगत् पश्यन्नपि न पश्यति सर्वत्रात्मानं पश्यति आत्मानम् अनुभवति च। अन्यत् न किञ्चिदनुभवति। तत्र अवस्थाविशेषे योगिनः कः मोहः कः शोकः, न कश्चिदपि इत्यभिप्रायः ॥ ७ ॥

सर्वभूतेति=एकत्वं समभावम् आस्थितः स्थितिं कुर्वन् यः ब्रह्मवित् यतिः सर्वभूतस्थितं सर्वेषु भूतेषु चराचरपदार्थेषु स्थितं विद्यमानं मां निर्विशेषं परंब्रह्म भजति सेवते। मद्भावमापन्नः स योगी सर्वथा सर्वप्रकारेण वर्तमानः अपि स्वप्रारब्धकर्मानुसारेण विविधकर्म कुर्वन्नपि पतितेऽस्मिन् मयि मत्स्वरूपे वर्तते तिष्ठति ॥ ३१ ॥

(मू. गी.) सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥

(वेद गी.) पञ्चस्वन्तः पुरुष आविवेश तान्यन्तः पुरुषेऽर्पितानि।
एतत्त्वात्र प्रतिमन्वानो अस्मि न मायया भवस्युत्तरो मत् ॥ ५२ ॥
यजुः २३।५२

पञ्चस्विति=हे मुमुक्षो! जीवात्मन्! पञ्चसु पृथिव्यादिपञ्चभूतेषु तन्मात्रासु च अन्तर्मध्ये ~~पृथिव्यादिपञ्चतन्मात्रा... [illegible]~~ पुरुषः परमात्मा आविवेश ओतप्रोतत्वेन प्रविष्टो वर्तते। तानि पञ्चभूतानि तन्मात्राश्च पुरुषे परब्रह्मणि अन्तः मध्ये अर्पितानि स्थितानि सन्ति। एतत् ब्रह्मैकत्वस्वरूपम् अत्र एवंविषये त्वा त्वां भवन्तं मुमुक्षुं जीवात्मानं प्रतिमन्वानः स्वीकुर्वन् अहं परमात्मा अस्मि वर्ते। त्वञ्च मायया मम दैव्या ज्ञानशक्त्या उत्तरः उत्कृष्टतरः योगी भवसि। अथ च मत् मत्तः पृथक् न असि मुक्तौ मम स्वरूपं प्राप्स्यसीति भावः ॥ ५२ ॥

आत्मौपम्येनेति=हे अर्जुन! यः अभ्युदितः यतिः सर्वत्र सर्वप्राणिषु आत्मौपम्येन स्वसादृश्येन सुखम् इष्टं यदि वा अथवा दुःखम् अनिष्टं समं तुल्यं यथा स्वसुखं प्रियं स्वदुःखम् अप्रियं भवति तथा सर्वप्राणीनाम् अपीति दृष्ट्वा सर्वत्र समतां पश्यति निरीहते एवं विधः वर्तमानः योगी परमः उत्कृष्टः मतः कथितः।३२॥

(मू. गी.) आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।
सुखं वा यदि वा दुःखं स योगी परमो मतः॥३२॥

(वेद. गी.) आत्मानं ते मनसारादजानामवो दिवा पतयन्तं पतङ्गम्।
शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि॥ ऋग्: २९।१८
ऋ: अष्ट. २ अध्या. ३ व. १२ मं. ६ (मं. ३. १ अनु. सू. १६३ मं. ६

आत्मानमिति=हे प्रभो! हे परमात्मन्! ते तव आत्मानं स्वरूपं मनसा स्वकीयेन प्रकृष्टमननवता चेतसा ज्ञानधिया वा आरात् स्वसमीपे स्वस्वरूपे सर्वप्राणिषु च स्थिते यद्वा आरात् अतिदूरे सर्वत्र स्थितम् आततम् अवः अधस्तात् भूमेः भूमिम् आरभ्य दिवा आकाशेन सह पतङ्गं पतन् पतन् गच्छन्तं सर्वत्र व्याप्नुवन्तं पतयन्तं सर्वत्र पतनशीलम् अजानाम् जानामि। सर्वत्र त्वाम् सदृशं जानामीति भावः। यद्वा पतोदिवा अन्तरिक्षेण मार्गेण दिवि वा पतयन्तं पतङ्गम् आदित्यम् अवः व्याप्नोषि अतो त्वां व्याप्तं जानामि। तथा च अहं सुगेभिः सुगमनसाधनैः अरेणुभिः सुखदुःखपांसुशून्यैः पथिभिः मार्गैः जेहमानं ~~सुखदुःखयोः~~ सर्वत्र समानतया समेधितं व्याप्नुवन्तं पतत्रि शीघ्रगामि शिरः अनन्तं सर्वस्य शिरोभूतम् अपश्यम् पश्यामि।।२९।१८

अर्जुन उवाच। हे मधुसूदन! हे भगवन् कृष्ण! त्वया श्रीमता यतिकर्तव्यत्वेन योऽयं निर्विकल्पसमाधियोगः साम्यत्वेन तुल्यत्वेन प्रोक्तः कथितः। अहं चञ्चलत्वात् मनसः चञ्चलताकारणात् एतस्य पूर्वोक्तस्य योगस्य स्थितिं निश्चलां स्थितिं स्थिरां न पश्यामि नाऽवलोकयामि ॥३३॥ चञ्चलं हि हे कृष्ण! हि इति निश्चये। मनः चित्तं चञ्चलं चपलं प्रमाथि शरीरेन्द्रियाणां प्रमथशीलं बलवत् स्वशक्त्या वीर्यवत् दृढम् वज्रसारं सूक्ष्ममस्ति। अतः अहं चाञ्चल्यादिगुणयुक्तस्य मनसः निग्रहं निरोधं वायोः पवनस्य निग्रहमिव सुदुष्करं सुतरं दुःखेन कर्तुं शक्यं मन्ये स्वीकरोमि ॥३४॥

(मू. श्लो.) अर्जुन उवाच। योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन। एतस्याहं
न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥३३॥ चञ्चलं हि मनः कृष्ण
प्रमाथि बलवद्दृढम्। तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥३४॥
(वेदम.) यत्ते चतस्रः प्रदिशो मनो जगाम दूरकम्।
तत्त आ वर्तयामसीह क्षयाय जीवसे ॥ ऋ. अ. ८. अध्या. १ व. २०. मं. ४, ५, ६, ७, ८, ९

यत्ते इति-हे जीवात्मन्! यत् ~~यस्मात् कारणात्~~ ते तव मनः[1] प्रदिशः[3] प्रकृष्टा महादिशः चतस्रः[2] दूरकम्[4] अत्यन्तं दूरं यथा भवति तथा जगाम गच्छति। ते तव तत् चञ्चलं मनः क्षयाय देहे निवासाय देहे स्थिरीकरणाय तथा जीवसे चिरकालजीवनप्राप्तये च आवर्तयामसि आवर्तयामि। एतदध्यायस्य समग्रः विंशः वर्गः मनश्चाञ्चल्यं प्रतिपादयति, ४, ५, ६, ७, ८, ९

हे महाबाहो! हे अर्जुन! मनः चलं चपलम् अत एव दुर्निग्रहं दुःखेन रोद्धुम् गृहीतुम् इति यावत्, शक्यम् इति। असंशयम् अस्मिन् विषये संशयो नास्ति हे कौन्तेय! हे कुन्तिसुत! अर्जुन! तत् चञ्चलं दुर्निग्रहम् अपि मनः वैराग्येण तीव्रमोक्षेच्छया समस्तप्रपञ्चे विषयवैरस्यं वैराग्यं तेन वैराग्येण गृह्यते अभ्यासेन सततं ब्रह्मप्रत्ययाऽऽवृत्त्या च तन्मनः गृह्यते इति ॥ ३५ ॥

(मू. गी.) श्रीभगवान् उवाच। असंशयं महाबाहो! मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥

(वेद. गी.) उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि।
क्रतुं दधिक्रा अनु संतवीत्वत् पथामङ्कांस्यन्वापनीफणत् ॥ ४ ॥
ऋ. अष्ट. ३ अध्या. ५ व. १४ मं. ४ (मं. ४ अनु. ४ सू. ४० मं. ४) यद्वा
"यथा मनो मनस्केतैः परापतत्याशुमत्" अथ. कां. ६ सू. १०५ मं. १
यद् वो मनः परागतं यद् बद्धमिह वेह वा तद् व आ वर्तयामसि" अथ. कां. १२ मं. ४

उतस्येति = स्यः त्यच्छब्दे लिङ्गव्यत्ययः, स्यशब्दे विशेषणेऽपि लिङ्गव्यत्ययो बोध्यः। नपुंसकलिङ्गस्थाने पुंल्लिङ्गव्यत्ययः। स्यः = तत् मनः वाजी = नपुंसकलिङ्गस्थाने पुंल्लिङ्गव्यत्ययः। वाजि चञ्चलत्वेन बहुवेगवत् ग्रीवायां कण्ठस्थाने कक्षे देहपार्श्वदेशे आसनि मुखे बद्धं संरुद्धं वैराग्याऽभ्यासाभ्यां संबद्धम् अपि क्षिपणिम् क्षेपणं वैराग्याऽभ्यासाभ्यां दूरप्रक्षेपणं तुरण्यति सद्यः गमयति। दधिक्राः धर्तव्ययोः वैराग्याऽभ्यासयोः धारकः सन्तवीत्वत् प्रवृद्धबलवत् भवत् पथां बहुविचारमार्गाणाम् अंकांसि सदसल्लक्षणानि क्रतुं कर्म शुभप्रशंसां वा अनु = अनुसृत्य आपनीफणत् सर्वतो भृशं गच्छति ॥ ४ ॥ यद्वा
यथेति = यथा येन प्रकारेण आशुमत् शीघ्रगामि मनः चित्तं मनस्केतैः मनसः विषयैः सह परापतति अतिशयेन दूरं गच्छति। यद्
यदि वः युष्माकं मनः परागतं चञ्चलत्वेन दूरं गतम्। यद् = यदि वा इह वा इह इतस्ततः अन्येषु विषयेषु परागतं लाम्यति तत् चंचलं मनः तेन अभ्यासेन वैराग्येण वा आवर्तयामसि पुनरत्रैवानयामि ॥ ४
व: युष्माकं ... युष्माकम्

असंयतात्मनेति:- असंयतात्मना असंयत: अवशीकृत: आत्मा मनो येन सः असंयतात्मा तेन असंयतात्मना अनिरुद्धमनसा समाधिम् अकुर्वता यतिना ज्ञानयोग: दुष्प्राप: दुःखेन प्राप्तुं शक्य: इति मे मम श्रीकृष्णस्य मति: इति मम सम्मति:। वश्यात्मना वश्य: वशीभूत: आत्मा मनो येन तथाभूतेन वश्यात्मना वशीकृतमनसा यतता यथानियमं योगसिद्धौ यत्नं कुर्वता यतिना योग: ज्ञानयोग: उपायत: पूर्वोक्तप्रकारेण उपायेन अवाप्तुं प्राप्तुं शक्य: भवति नान्यथा इति ॥ ३६ ॥

(मू.गी.) असंयतात्मना योगो दुष्प्राप इति मे मति:।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायत: ॥३६॥

(वेदगी.) संज्ञपनं वो मनसोऽथो संज्ञपनं हृद:।
अथो भगस्य यच्छ्रान्तं तेन संज्ञपयामि व: ॥२॥
अथ.कां.६ अनु.८ सू.७४ मं.२ ॥

संज्ञपनमिति:- हे ब्रह्मवेत्तार:!!! हे मुमुक्षव:!!! वो युष्माकं योगसमाधौ प्राप्तये यततां यतीनां मनस: ज्ञानसाधनस्य इन्द्रियस्य संज्ञपनं सम्यग् ब्रह्मज्ञानजननं भवतु। अथो अपि च हृद: विषयादिषु हरणशीलस्य मनस: संज्ञपनं सम्यक्तया ब्रह्मप्राप्ति: ज्ञानजननं भूयात्। अथो अपि च भगस्य ज्ञानैश्वर्यस्य प्राप्तये इति शेष:। यत् श्रान्तं श्रमजनितं तपोऽस्ति। तेन श्रमजनिततपसा व: युष्मान् ब्रह्मज्ञानयोगाय यतमानान् यतीन् संज्ञपयामि समानज्ञानान् करोमि। संज्ञपनम् - "संजानानान् प्रयुंक्ते इत्यस्मिन्नर्थे "हेतुमति च" इति णिच्। तत: "पुकि कृते" "मारणतोषणनिशामनेषु ज्ञा" इति मित्त्वात् "मितां ह्रस्व:" इति ह्रस्वत्वम् "नन्दिग्रहिपचादिभ्य:" इति ल्युप्रत्यय:। श्रान्तम् "अधिकरणे क्त:" श्राम्यन्ति अस्मिन् क्तेः "यस्य विभाषा" इतीण्निषेध: "अनुनासिकस्य क्विझलो:" इति दीर्घत्वम् ॥ २ ॥

अर्जुन उवाच = हे कृष्ण! योगसिद्धौ यतते इति यतिः, न यतिः अयतिः योगस्य सिद्धौ यत्नम् अकुर्वन् श्रद्धया उपेतः युक्तः सन् श्रद्धया योगाऽनुष्ठानेन मोक्षाप्तिः, इत्यास्तिकबुद्ध्या उपेतः मिलितः सन् योगात् ज्ञानयोगात् यद्वा योगसमाधेः चलितमानसः चलितं पतितं मानसं चित्तं यस्य स चलितमानसः विनष्टचित्तः यतिः योगसंसिद्धिं योगस्य सम्यग्ज्ञानस्य संसिद्धिं फलम् अप्राप्य लाभम् अकृत्वा स्वमरणानन्तरं कां गतिं स्वर्गादिप्राप्तिं गच्छति प्राप्नोति? ॥३७॥ कच्चिदिति = हे महाबाहो! भगवन्! कृष्ण! ब्रह्मणः परमात्मनः पथि मार्गे कर्ममार्गे ज्ञानमार्गे च विमूढः कर्मदोषेण मोहं गतः अप्रतिष्ठः नास्ति प्रतिष्ठा ज्ञानकर्मान्यतरसाधनं यस्य सः अप्रतिष्ठः ज्ञानकर्मान्यतरसाधनरहितः यतिः उभयभ्रष्टः कर्मयोगज्ञानयोगाभ्यां भ्रष्टः पतितः सन् छिन्नाभ्रमिव पूर्वापूर्वमेघसमूहभ्रष्टं स्वल्पाभ्रमिव छिन्नं सत् अन्तराले नश्यति स्वरूपनाशं प्राप्नोति तथाऽयमपि नश्यति कच्चित् किम् ।३८॥ एतन्मेति = हे कृष्ण! त्वं मे मम एतं पूर्वप्रतिपादितं संशयं संदेहम् अशेषतः संपूर्णं यथा स्यात्तथा छेत्तुम् दूरीकर्तुम् अर्हसि समर्थोऽसि। त्वदन्यः त्वत्तोऽन्यः त्वदन्यः त्वद्भिन्नः देवो वा ऋषिर्वा अस्य संशयस्य संदेहस्य छेत्ता निरासकः हि इति निश्चये, न उपपद्यते न संभवति ॥३९॥

(मू. गी.) अर्जुन उवाच। अयतिः श्रद्धयोपेतः योगाच्चलितमानसः। अप्राप्य योगसंसिद्धिं
कां गतिं कृष्ण! गच्छति ।३७। कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति। अप्रतिष्ठो
महाबाहो विमूढो ब्रह्मणः पथि ।३८। एतन्मे संशयं कृष्ण! छेत्तुमर्हस्यशेषतः।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥३९॥ १ ब. २१ मं. १

(वेद.) सेमं नः काममापृण गोभिरश्वैः शतक्रतो। स्तवाम त्वा स्वाध्यः ॥ ऋ. अ. १ अध्या

सेममिति = हे शतक्रतो! शतानि क्रतवः कर्माणि यस्य स शतक्रतुः। तत्संबुद्धौ हे शतक्रतो! हे कृत कर्मन्! परमात्मन्! स त्वं नः अस्मदीयम् इमं कामं काम्यमानं संदेहम् अश्वैः विषयं व्याप्नुवद्भिः गोभिः इन्द्रियैः सह आपृण अशेषतः पूरय। अस्माकं संशयं दूरीकृत्य मदिन्द्रियवृत्तिः सुस्थिरा भवतु इत्यर्थः। वयमपि स्वाध्यः सुष्ठु सर्वतः त्वद्ध्यानयुक्ताः सन्तः त्वा त्वां परमात्मानं स्तवाम संशयं छेत्तुम् स्तुतिं कुर्मः। यतः त्वदन्यः संशयछेता उत्तमः कश्चिदपि नास्ति ॥ ९ ॥

हे पार्थ! हे पृथायाः पुत्र! हे अर्जुन! हे तात! मद्दत्तोपदेशं शिष्यप्रशिष्येभ्यः तनोति विस्तारयतीति तातः तत्संबुद्धौ हे तात! अर्जुन! तस्य योगसमाधिस्थस्य यतेः विनाशः हानिः प्रतिष्ठाभंगः इह अस्मिन् लोके नैव विद्यते नैवास्ति। तथा च अमुत्र परस्मिन् लोके विनाशः दुर्योनिमयी दुर्गतिः न विद्यते। कल्याणकृत् शुभकर्मकृत् कश्चित् पुरुषः दुर्गतिं प्रतिष्ठाभंगं दुर्योन्यादिदुर्गतिं नहि गच्छति नहि प्राप्नोति किन्तु सद्गतिमेव गच्छति ॥ ४० ॥

(मू. गी.) श्रीभगवानुवाच। पार्थ! नैवेह नामुत्र विनाशस्तस्य विद्यते।
नहि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति ॥ ४०

(वेद गी.) नैनं प्राप्नोति शपथो न कृत्या नाभिशोचनम्।
नैनं विष्कन्धमश्नुते यस्त्वा बिभर्त्याञ्जन ॥
अथ. कां. ४ अनु. २ सू. ९ मं. ५

नैनमिति = हे आञ्जन! = आसमन्तात् अनक्ति प्रकटीकरोति जगत् इति आञ्जनः हे परमात्मन्! यः ब्रह्मवित् यतिः योगी त्वा त्वां परमात्मानं बिभर्ति सर्वदा हृदये योगाऽभ्यासेन धारयति। एनं त्वद्ध्यातारं कल्याणकृतं पुरुषं शपथः परकृतः शापः न प्राप्नोति। तथा च एनं शुभकर्मकर्तारं कृत्या पराऽभिचारजनिता कृत्या पापमयकामना न प्राप्नोति। तथा च एनं कल्याणकृतं जनम् अभिशोचनम् परकृताऽपमानजनितशोकः न प्राप्नोति। तथा विष्कन्धं सद्योनिप्राप्तौ विघ्नजातम् अपि एनं पुण्यकर्तारं योगिनं न अश्नुते न ~~व्याप्नोति~~ [अश्नुते] ॥ आञ्जन = अञ्जू व्यक्तिकान्तिगतिषु। अस्मात् आङ् पूर्वात् ल्युट् प्रत्ययः ॥ कृत्या = कृञः शच इति चकारात् संज्ञायां करोतेः क्यप् " ह्रस्वस्य पिति कृति तुक् " इति तुक् ॥ ५ ॥

प्राप्येति = योगमार्गे प्रवृत्तः यतिः योगफलम् अप्राप्य मरणानन्तरं पुण्यकृताम् अश्वमेधादियज्ञकर्तॄणां लोकान् वासस्थानानि प्राप्य लब्ध्वा तत्र शाश्वतीः समाः बहुवर्षं यावत् उषित्वा वासं कृत्वा पुण्यक्षये सति शुचीनां पवित्रात्मनां श्रीमतां भाग्यशालिनां महद्व्यानां गेहे भवने वंशे वा योगभ्रष्टः योगपतितः जनः अभिजायते समुत्पन्नो भवति न तु कर्मभ्रष्टः उत्पद्यते ॥४१॥

(मू.गी.) प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥४१॥
(वेद.गी.) आ नयैतमा रभस्व सुकृतां लोकमपि गच्छतु प्रजानन्।
तीर्त्वा तमांसि बहुधा महान्त्यजो नाकमा क्रमतां तृतीयम् ॥१
अथ. कां. ९ अनु. ३ सू. ५ मं. १

हे गुरो! स्वसमीपं ~~प्राप्य~~
आनयैतेति = एतं योगभ्रष्टं यतिम् आनय ~~योगमार्गात्~~ ~~कर्ममार्गे~~ प्रापय। यथा कर्मयोगेन योगाऽभ्यासमार्गम् आरभस्व उपक्रमताम् अयम्। कर्ममार्गमे
~~[illegible]~~। यथा च अयं सुकृतां पुण्यकृतां लोकं स्वर्गादिलोकम् अपि गच्छतु प्राप्नोतु। न जायते इति
अजः जीवात्मा ज्ञानयोगकर्मयोगाभ्यां बहुधा बहुप्रकारेण महान्ति अत्युग्राणि तमांसि पापानि तीर्त्वा पारं कृत्वा तृतीयं नाकं
तृतीयं धाम मुक्तिपदम् इतिभावः। आक्रमताम् आसमन्तात् क्रमतां प्राप्नोतु ॥ १ ॥

अथवेति= अथवा मृत्योरनन्तरं धीमतामेव मेधाविनामेव योगिनां ज्ञाननिष्ठानां कुले वंशे योगभ्रष्टस्य जन्म भवति। ईदृशं वैराग्यमोक्षेच्छाऽनुरूपं यत् जन्म, तत् एतत् जन्म लोके योन्यन्तरगमनमन्तरेण दुर्लभतरं कठिनतपश्चर्यया लभ्यं भवति न त्वल्पेनैव ॥४२॥

(मू·गी·) अथवा योगिनामेव कुले भवति धीमताम्।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥४२॥
(वेद·गी·) पुनर्मनः पुनरायुर्म आगन् पुनः प्राणः पुनरात्मा म आगन्।
पुनश्चक्षुः पुनः श्रोत्रं म आगन्। वैश्वानरो ऽदब्धस्तनूपा अग्नि-
र्नः पातु दुरितादवद्यात् ॥यजुः ४।१५

पुनरिति= मे ज्ञानयोगभ्रष्टस्य मे मम मनः विज्ञानसाधकं पुनः अपरजन्मनि आगन् प्राप्नोति। तथा-चायुः जीवनं जीवनकालो वा मे मह्यम् आगन् आसमन्तात् प्राप्नोति। पुनः मनुष्यदेहधारणानन्तरं मे मम "आत्मा" "अतति सर्वत्र व्याप्नोति सर्वान्तर्यामी परमात्मा स्वस्वरूपो वा अभितः आगन् प्राप्नोति। पुनः देहधारणानन्तरं मे मह्यं चक्षुः "चष्टे येन तद्" रूपग्राहकम् इन्द्रियम् आगन् प्राप्नोति। पुनः अस्मिन् जन्मनि श्रोत्रम् "शृणोति शब्दान् येन, तत् शब्दग्राहकम् इन्द्रियम् मे मह्यम् आगन् प्राप्नोति। वैश्वानरः विश्वान् नरान् मुक्तौ स्वसमीपे नयतीति वैश्वानरः, परमेश्वरः अदब्धः केनाऽपि हिंसितुमनर्हः, तनूपाः शरीरस्य गोपायिता अग्निः ज्योतिस्वरूपविज्ञानानन्दघनमयः परमात्मा नः "वैराग्यमोक्षेच्छानुरूपजन्मधारकान् योगभ्रष्टान् अस्मान् दुरितात् पापजन्यप्राप्तव्यदुर्योन्यादिगतिदुःखात् अवद्यात् पापाचरणात् पातु रक्षतु अस्माकं जन्म धीमताम् योगिनां कुले भूयात् ॥४।१५

तत्रेति= तत्र ज्ञानियोगिकुले जन्म गृहीत्वा स योगी पौर्वदैहिकं पूर्वजन्मनि लब्धं तं बुद्धिसंयोगं बुद्धिः ज्ञानं पराऽवरतत्त्वैकज्ञानं तदेव सम्=समीचीनः योगः मुक्तिसिद्धौ परमोपायः तं बुद्धिसंयोगं ज्ञानयोगं लभते प्राप्नोति। ततः ज्ञानयोगसिद्ध्यनन्तरं भूयः पुनः अस्मिन् जन्मनि संसिद्धौ ज्ञानसंसिद्धिनिमित्तं मुक्तिनिमित्तमितियावत् यतते प्रयत्नं करोति। हे कुरुनन्दन! हे अर्जुन! ॥४३॥

(मू॰गी॰) तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥४३

(वेद॰गी॰) एषा ते शुक्र तनूरेतद्वर्चस्तया सम्भव भ्राजं गच्छ।
जूरसि धृता मनसा जुष्टा विष्णवे ॥ यजुः ४।१८

एषेति= हे शुक्र! हे सत्त्वगुणविशिष्ट! यते! पूर्वजन्मनि योगभ्रष्टानन्तरं मृत्युं प्राप्य एषा एतज्जन्मविशिष्टा तनूः शरीरं ते त्वया विष्णवे परमेश्वरप्राप्तये "मुक्तये इत्यर्थः", धृता= गृहीता, मनसा मनोनिरोधपूर्वकं ज्ञानसंयोगेन जुष्टा सेविता अस्ति। तया ज्ञानयुक्तया परमात्मार्पितया तन्वा जूः असि= योगि॰त्वा जीवनं प्राप्तोऽसि। यद्वा तया लब्धया तन्वा जूः असि ~~जीवनं प्राप्तोऽसि~~ = ज्ञानवान् असि। तथैव एतत् प्रत्यक्षस्वरूपं वर्चः विज्ञानं तेजो वा सम्भव समीचीनतया निष्पादयस्व। तया प्रत्यक्षीभूतया तन्वा परिपूर्णज्ञानप्रयत्नेन भ्राजं प्रकाशस्वरूपं परंब्रह्म गच्छ प्राप्नुहि। जूः =जीव प्राणधारणे अस्यात्क्विबन्तस्यापि ऊ प्रत्यये जूः इति भवति। जुष्टा=जुषी प्रीतिसेवनयोः ॥१८॥

पूर्वाऽभ्यासेनेति = हि यस्मात् कारणात् तेनैव पूर्वाऽभ्यासेन पूर्वजन्मनि अभ्यासेन सततं समाध्यावृत्त्या सः योगपतितः यातिः अवशः अनिच्छन्
अपि ह्रियते बलात्कारेण योगसमाधौ स्थाप्यते। योगस्य निर्विकल्पसमाधि प्रापकस्य परमात्मनः जिज्ञासुः ज्ञातुम् इच्छुः शब्दब्रह्म "अहमेव
ब्रह्माऽस्मीति केवलेन शब्दमात्रेण उच्चार्यमाणं ब्रह्मभावम् अतिवर्तते परित्यज्य प्रवर्तते अपितु स्वाऽनुभव प्राप्यं ब्रह्मत्वम् अधिग
च्छतीति भावः। यद्वा शब्दब्रह्म वेदः तं वेदप्रतिपादितं सकामकर्म त्यक्त्वा प्रवर्तते इति ॥ ४४॥

(मू· गी·) पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४॥

(वे· गी·) चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ ४५
ऋ· अष्ट· २ अध्या· ३ व· २२ मं· ४५ (मं· १ अनु· २२ सू· १६४ मं· ४५)

चत्वारीति = वाक्पदानि वाचः वाण्याः पदानि स्थानानि चत्वारि चतुःसंख्याकानि परिमिता परिमितानि सन्ति। मनुष्यस्य वाचा आर्तत्वं जिज्ञासुत्वम् अर्थार्थि
त्वं ज्ञानित्वञ्च प्रतीयते। यद्वा परा पश्यन्ती मध्यमा वैखरी इति चत्वारि वाक्पदानि सन्ति। सा एकैव नादात्मिका वाक् मूलाधारात् उदिता सती
"परा" इत्युच्यते। नादस्य च सूक्ष्मत्वेन दुर्निरूपत्वात् सैव हृदयगामिनी "पश्यन्ती" इत्युच्यते। योगिभिः द्रष्टुं शक्यत्वात् सैव बुद्धिं गता वि
वक्षां प्राप्ता "मध्यमा" इत्युच्यते। मध्ये हृदयाख्ये उदीयमानत्वात् मध्यमा॥ अथ यदा सैव वाक् "अहं ब्रह्माऽस्मि" इति वक्त्रे स्थिता ता-
ल्वोष्ठादिव्यापारेण बहिर्निर्गच्छति तदा "वैखरी" इत्युच्यते। तानि चत्वारि वाक्पदानि मनीषिणः "मनसः स्वामिनः" स्वाधीनमनस्काः
ब्राह्मणाः ब्रह्मस्य "शब्दब्रह्मणः" "अहं ब्रह्माऽस्मीति" अधिगन्तारो योगिनः परादिचत्वारि पदानि विदुः जानन्ति। तेषु चतुर्षु मध्ये
त्रीणि परादीनि गुहा गुहायां हृदयाकाशे निहिता निहितानि ~~सन्ति~~ हृदयान्तर्वर्तित्वात् मनुष्याः पामराः योगविद्यानधिगन्तारः
वाचो वाङ्मयस्य तुरीयं चतुर्थी भागम् "अहं ब्रह्माऽस्मीति वदन्ति व्यवहरन्ति न तु योगिनः। योगसमाधिनिष्ठा योगिनः शब्दब्रह्म
अतिवर्तन्ते इति ॥ ४५॥

^ न इङ्गयन्ति न चेष्टन्ते

प्रयत्नादिति= प्रयत्नात् अतितीव्रयत्नात् यतमानः योगसिद्धौ यत्नं कुर्वाणः तु योगी ब्रह्मवेत्ता यतिः संशुद्धकिल्बिषः सम्यक् शुद्धं दूरीकृतं किल्बिषम् अज्ञानं येन तथाभूतः अनेकजन्मसंसिद्धः अनेकेषु बहुषु जन्मसु संसिद्धः योगसमाधिनाऽप्रतिबद्धज्ञानः सन् ततः तेन योगसमाधिजनितब्रह्मदर्शनेन परां अत्युत्कृष्टां गतिं स्वस्वरूपभूतां परमाऽवस्थां विदेहकैवल्यं याति प्राप्नोति ॥४५॥

(मू॰गी॰) प्रयत्नाद् यतमानस्तु योगी संशुद्धकिल्बिषः।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥४५

(वेदगी॰) मुनयो वातरशनाः पिशंगा वसते मला।
वातस्याऽनुध्राजिं यन्ति यद्देवासो अविक्षत ॥२॥
ऋ॰ अ॰ ८ अध्या॰ ६ व॰ २४ मं॰ २ (मं॰ १० अनु॰ ११ सू॰ १३६ मं॰ २)

मुनय इति= वातरशनाः वाते वायौ रशना जिह्वा येषां ते तथाभूताः वातरशनाः वायुमात्रभोजनाः मुनयः मननशीलाः अतीन्द्रियार्थदर्शिनः बहुजन्माऽभ्यासेन ब्रह्मवेत्तारः यतयः, पिशंगा ~~पि~~ पिशंगानि कपिलवर्णानि मलाः= मलानानि वल्कलरूपाणि वासांसि वसते योगसमाधिसिद्धये आच्छादयन्ति। यत् यस्मात् अनेकजन्मप्राप्तसंसिद्धिकारणात् देवासः योगसमाधितपोमहिम्ना दीप्यमानाः सन्तः अविक्षत ब्रह्मदर्शनं प्राविशन्। ततः योगसमाधिजनितब्रह्मदर्शनानन्तरं वातस्य सर्वजगदाधारभूतस्य सूत्रात्मनः परब्रह्मणः ध्राजिं परां गतिं परमाऽवस्थां विदेहकैवल्यम् अनुयन्ति अनुगच्छन्ति ब्रह्मोपासनया ब्रह्मस्वरूपम् अनुगता इति भावः ॥२॥

तपस्विभ्य इति = तपस्विभ्यः पञ्चाग्नितापसेभ्यः योगी ब्रह्मवित् यतिः अधिकः भवति। ज्ञानिभ्यः अपि केवलं ज्ञानमात्राधारकेभ्यः वेदान्तादि
शास्त्रार्थविद्भ्यः अपि अधिकः उत्तमः मतः कथितः। कर्मिभ्यश्च वैदिकाग्निहोत्रप्रभृतिसकामकर्मकर्तृभ्यः अपि योगी ब्रह्मज्ञानी अधिकः
उत्कृष्टः भवति। हे अर्जुन! तस्मात् कारणात् त्वं योगी योगनिष्ठाजनितब्रह्मज्ञानेन ब्रह्मपदवीप्राप्त्यधिकारी भव ॥ ४६ ॥

(मू॰गी॰) तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥४६॥

(वेदगी॰) एकं नु त्वा सत्पतिं पाञ्चजन्यं जातं शृणोमि यशसं जनेषु।
तं मे जगृभ्र आशसो नविष्ठं दोषा वस्तोर्हवमानास इन्द्रम् ॥११॥
ऋ॰ अष्ट॰ ४ अनु॰ १ व॰ ३३ मं॰ ११ (मंड॰ ५ अनु॰ २ सू॰ ३३ मं॰ ११)

एकमिति = हे मुमुक्षो! हे ब्रह्मवेत्तः! हे यते! जनेषु तपस्विज्ञानिकर्मिमनुष्येषु मध्ये पाञ्चजन्यं पञ्चजनेभ्यः मनुष्येभ्यः हितं यशसं ब्रह्म-
ज्ञानयशोयुक्तं सत्पतिं "सत् ब्रह्म" "ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" तदेव पतिः स्वामी यस्य स सत्पतिः
तं सत्पतिं परब्रह्मोपासकं यद्वा सतां सज्जनानां वचनानां पालकम्। जातम् ~~[illegible]~~ विद्यमानं त्वां ब्रह्मयोगिनम्
एकं नु मुख्यमेव अहं शृणोमि त्वदुपासनयाऽवगच्छामि। दोषा रात्रौ वस्तोः वासरे अहर्निशमित्यर्थः। इन्द्रम् ऐश्वर्योपपन्नं परमा-
त्मानं मां हवमानासः स्तुवन्तः सन्तः आशसः = मुक्त्याशासंपन्नाः ते एव योगिनः मे मम नविष्ठं सर्वदा अतिशयेन
नवीनं तम् अपवर्गम् जगृभ्रे गृह्णन्ति "कालव्यत्ययः वचनव्यत्ययश्च। लडर्थे लिट्लकारः ॥११

योगिनामिति = यः ब्रह्मवित् यतिः श्रद्धावान् "सर्वं खल्विदं ब्रह्म" इतिसद्भावनया युक्तः सन् मद्गतेन मयि ब्रह्मणि गतेन प्राप्तेन अन्तरात्मना मनसा मां परमात्मानं भजते सेवते "सर्वं ब्रह्मैव" इति पश्यति। सर्वेषां भिन्नभिन्नस्वरूपोपासकानां योगिनां मध्ये स ब्रह्मवित् योगी मे मम ईश्वरस्य युक्ततमः योगिश्रेष्ठः मतः अभिमत इति ॥४८॥ इतिश्रीजगन्नाथशास्त्रिसंकलितायां गीतावेदार्थबोधिन्यां षष्ठोऽध्यायः समाप्तः। श्रीकृष्णार्पणमस्तु ॥६॥

(मू. गी.) योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥४८॥
इति श्रीमद्भगवद्गीतायां श्रीकृष्णार्जुनसंवादे षष्ठोऽध्यायः समाप्तः।

(वेदगी.) ब्राह्मणो जज्ञे प्रथमो दशशीर्षो दशास्यः।
स सोमं प्रथमः पपौ स चकारारसं विषम् ॥१॥

अथ. कां. ४ सू. ६ मं. १

ब्राह्मण इति = ब्राह्मणः "ब्रह्म जानातीति" ब्राह्मणः इत्युक्तेः परब्रह्मज्ञः ब्रह्मवेत्ता योगी दशशीर्षः दश संख्याकानि ज्ञानकर्मेन्द्रियाणि शीर्षाणि शिरोरूपाणि यस्य स दशशीर्षः दशेन्द्रियैः ब्रह्मज्ञानाऽनुकाता। दशास्यः दशेन्द्रियाणां तद्वृत्तीनां च दूरप्रक्षेप्ता इन्द्रियग्रामाऽवशीभूतः प्रथमः सर्वयोगिभ्यः मुख्यतमः उत्कृष्टः जज्ञे प्रादुर्भूतः वर्तते जायते च। स च प्रथमः मुख्यतमः युक्ततम एव सोमं ब्रह्मरसं पपौ पिबति अर्थात् स योगी एव परब्रह्म भजते। स युक्ततमः एव विषं पापमयं विषम् अरसं रसहीनं चकार करोति। अतः एवंविधः योगी मे युक्ततमः मत इतिभावः। चकार = छान्दसो लिट्। जज्ञे इति जनी प्रादुर्भावे इत्यस्मात् लिट् "गमहनजन —" इत्युपधालोपे "द्विर्वचनेऽचि च" इतिस्थानिवद्भावात् द्विर्वचनम् ॥ इति श्री ... पदवाक्यप्रमाणज्ञ ... न्यायभूषणोपपद जगन्नाथशास्त्रि ... टीकितायां वेदगीतार्थबोधिन्यां षष्ठोऽध्यायः समाप्तः। श्रीकृष्णार्पणमस्तु ॥६॥